क्रमाभिधानमस्त्येव । अतएव पितरौ भ्रातरस्तथेति याज्ञवल्क्यवचने अनयैव रीत्या पितृक्रमावगमं वक्ष्यतीति चेन्नैवम् । पितरौ भ्रातरस्तथेत्यत्र तदभावे मातुरिति स्फुटक्रमिकाधिकारबोधकविष्णुवचनदर्शनात् । जनकपुंस्त्वेव पितृपदस्य तात्पर्य्यमवधार्य्यते । अनन्तरं च द्विवचनवलेनैकशेषकल्पनया मातुरुपस्थितौ युक्तः क्रमाधिकारः इह तु तथाविधविशेषवचनाभावात् द्वन्द्वबललभ्यार्थविशेषपरित्यागे हेत्वभावात्। युगपदुपस्थित्यर्थं लक्षणाया एव युक्तत्वादिति। इत्थं मातापित्रोरित्युक्तावपि क्रमिकाधिकारबोधकतथाविधवचनान्तराभावात्। वाक्यावगतयुगपदधिकार एव कुतो न स्यात्। अतएव शेषेषु पितृगामि तदित्येकशेषेण युगपदधिकार एव याज्ञवल्क्यवचनेनोक्त इत्यत आह। कन्याधन इति। अत्रापीति । तथाच द्वन्द्वैकशेषाद्वा साहित्यावगमात् धनसम्बन्धापेक्षया तस्य प्रत्येकपरिसमाप्तत्वात् । किन्त्वभिधानापेक्षया युगपज्ज्ञानं श्राद्धानि षोडश इतिवत् क्रमिकयोरपि सम्भवतीति किमधिकारः क्रमेण युगपद्वा इत्याकाङ्क्षायामेकत्र दृष्टन्यायात् कन्याधनवत् तथाविधोढाधनेऽपि क्रमेणैवाधिकारः कल्प्यत इति भावः । तद्गमेनेति । नत्वेतस्मिन्रूपयम्मकरणान्तरे पुनः करणीयमिति भावः । वाग्दत्तामरणे तु वरदत्तावशिष्टं वरो गृह्णीयात् । तथा याज्ञवल्क्यः । दत्त्वा

कन्यां वरश्चेत्प्रयच्छन्दद्याच्च शौदयम्। मृतायां धर्ममादद्यात् परिशोध्योभयं व्ययमिति। तथा चार्हतीत्यनुवृत्तौ मनुः। स्वञ्च शुल्कं वोढेति। वाग्दानकाले यद्येन दत्तन्तत्तस्यैव ग्राह्यमिति सम्प्रदायः। अत्रापि यौतकधनेऽपि। ननु वचनाभावेऽपि एकत्र दृष्टन्यायादेव तथा स्यात् अतआह॥०॥

वचनाभावान्मातापित्रोरेवाधिकारश्रुतेः।

यत्पुनः परिणयानन्तरम्पितृमातृभर्त्तृकुलात्स्त्रिया लब्धन्धनन्तद्भ्रातृणामेव। तदाह।

याज्ञवल्क्यः बन्धुदत्तं तथा शुल्कमन्वाधेयकमेव च। अप्रजायामतीतायाम्बान्धवास्तदवाप्नुयुः। बन्धुदत्तमिति मातापितृभ्यां यद्दत्तं तत्पुत्राश्च भ्रातरएव बान्धवास्तदाह।

वृद्धकात्यायनः पितृभ्याञ्चैव यद्दत्तं दुहितुः स्थावरन्धनम्। अप्रजायामतीतायां भ्रातृगामि तु सर्व्वदा। अप्रजात्वमात्रनिमित्तत्वेन भ्रातुरधिकारावगतेः। सर्व्वदापदेन ब्राह्मादिपैशाचान्तविवाहितायाअप्रजायाधनं भ्रातृगाम्येव भवतीति विश्वरूपोक्तमादरणीयम्। स्थावरपदाद्दण्डापूपन्यायादेवाऽपरस्य धनस्य सिद्धिः।

बन्धुदत्तपदेन कन्यादशायां यत्पितृभ्यान्दत्तन्तदुच्यते। विवाहात्परतोलब्धधनस्यान्वाधेयपदेनोपात्तत्वात्। विवाहकालीने च भर्त्तुः पित्रोर्वाधिकारात्। अन्वाधेयमाह।

कात्यायनः। विवाहात्परतोयत्तु लब्धम्भर्त्तृकुलात्स्त्रिया। अन्वाधेयं तदुक्तन्तु लब्धम्बन्धुकुलात्तथा। भर्तृकुलात् श्वशुरकुलादेः बन्धुकुलात्पितृमातृकुलात्। तथापरमाह॥०॥

मातापित्रोरेवेति। एवकारेण भ्रातृव्यवच्छेदः तथाचानेनैव तदधिकाराकांक्षानिवृत्तेर्न्न न्यायावसरइतिभावः। पितृमातृभर्तृकुलादिति। अन्वाधेयपदार्थउक्तः। भ्रातृणामेवेति। न पुनर्भर्त्तुः पित्रोर्वेत्यर्थः वचनक्रमानुरोधात् प्रथमबन्धुदत्तमितिव्याचष्टे। बन्धुदत्तमिति। कन्यादशायामित्यनुपदमेव वक्ष्यति। अतएव वक्ष्यमाणवचनैकवाक्यतया पित्रोर्बन्धुपदार्थत्वादेव भ्रातरोबान्धवाइति। बन्धोरपत्यानीति योगादितिभावः। बन्धुपदबान्धवपदयोरेकार्थत्वे प्रमाणमाह। तदाहेति। अप्रजात्वमात्रनिमित्तत्वेनेति। अतः कन्यायामपि अप्रजात्वाविशेषात् तद्विषयत्वमस्तमिति बन्धुदत्तपदेनेति। वक्ष्यमाणग्रन्थसङ्गतिरित्यतोराजपादौ शुल्काभावा

दिव्यादिवक्ष्यमाणपक्षनिरासेऽपि दृष्टमकमाह । सर्व्वदेति । प्रागुक्तमप्यन्वाधेयकमिति व्यवहितत्वादुपस्थितिसौकर्य्यार्थं पुनराह । अन्वाधेयमाहेति ॥ ० ॥

ऊर्द्ध्वं लब्धन्तु यत्किञ्चित्संस्कारात् प्रीतितः स्त्रिया भर्त्तुः सकाशात्पित्रोर्व्वा अन्वाधेयन्तु तद्भृगुः । शुल्कमाह गृहोपस्कर वाह्यानान्दोह्याभरणकर्म्मिणाम् मूल्यं लब्धन्तु यत्किञ्चित् शुल्कन्तत्परिकीर्त्तितम् । गृहादिकर्म्मिभिः शिल्पिभिस्तत्कर्मकरणाय भर्त्रादिप्रेरणार्थं स्त्रियै यदुत्कोचदानन्तत् शुल्कन्तदेव मूल्यं प्रवृत्त्यर्थत्वाद्व्यासोक्तत्वा ।

यदानीतु भर्तृगृहे शुल्कन्तत्परिकीर्त्तितम् । भर्तृगृहगमनार्थमुत्कोचादि यद्दत्तन्तच्च ब्राह्मादिष्वविशिष्टन्तदेवमादिकमप्रजास्त्रीधनं भ्रातरो गृह्णीयुः । न पुनरासुरादिषु विवाहेषु यत्कन्याभ्यः शुल्कदानन्तदभिप्रायम् । आसुरमात्रगोचरत्वात् शुल्कस्य यथोक्तं ।

मनुना । आसुरोद्रविणादानाद्गान्धर्व्वः समयान्मिथः । राक्षसोयुद्धहरणात्पैशाचः कन्यकाच्छलात् ॥ ० ॥

भगिनीनाञ्चदभावे च केवलभ्रातॄणां धनसम्बन्धे समं स्यादश्रुतत्वाद्विशेषस्येति न्यायतएव समत्व प्राप्तेरनर्थकं सममिति सएवं वाच्यः। भ्रातृभगिन्योरप्यधिकारे समं स्यादिति न्यायात्समत्वप्राप्तेरविशेषादानर्थक्यस्य तदवस्थत्वात्। किञ्च। केवलभ्रात्रधिकारपक्षेऽपि पितृधनइव मातृधनेऽपि विंशोद्धारादिप्रसक्तिनिवर्त्तकतया समपदस्य सार्थकत्वात् कथमनर्थकता। अतोऽत्र वचनन्यायानभिज्ञः सर्व्वैः प्राचीनैरवशेयएव किञ्चिज्ज्ञइति। किन्तूक्तादेव हेतोः पुत्रकुमारीदुहित्रोस्तुल्यवदधिकारः। एतयोश्चान्यतराभावेऽन्यतरस्य तद्धनं द्वयोरप्येतयोरभावे ऊढायादुहितुः पुत्रवत्याः सम्भावितपुत्रायाश्च तुल्योऽधिकारः स्वपुत्रद्वारेण पार्व्वणपिण्डदानात्॥०॥

तद्वचनमाह। यथेति। अप्रजायामिति। प्रजायन्तेऽतिः पुत्रदुहितृपौत्रदौहित्रप्रपौत्ररहितायामित्यर्थः। सुव्यक्तमिति। सामान्यपदादिति शेषः। केवलकुमार्य्योरिति। भ्रातृत्वेऽपौत्यादिविशेषवचनं वक्ष्यमाणम्। ननु भ्रातृभगिन्योरधिकारे भगिन्यपेक्षया भ्रातुरभ्यर्हितत्वेन विंशोद्धारप्रसक्तौ तन्निवर्त्तकतयैव समत्वविधानं सार्थकमिति यदि तदा केवल

आत्माधिकारपक्षेऽपि तथैव सार्थकमिति कथमनर्थकतेत्यत आह। किच्चेति। वचनान्यायेति। वचनं सामान्यं पुत्रकन्यायामिति। न्यायः किच्चेत्यादिनोक्तयुक्तिः। अन्यतरेति। आत्मवैरिव तुल्या धिकारादिति भावः। ऊढायाइति। न पुनर्व्यक्त्यमाणयोत कथनेत् कन्याया अभावे वाग्दत्तायास्तदभावऊढायाइति क्रमः। प्रमाणाभावादिति भावः॥०॥

अतएव पूर्व्वोक्तदुहित्रभावे दौहित्रस्यैव धनाधिकारः।

"दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्रवत्।" इति मनुवचनात्। नतु वंध्याविधवादुहित्रोः स्वसत्तया स्वजन्यसत्तया च पार्व्वणपिण्डदानाभावात्।

अतएव नारदः "पुत्राभावे च दुहिता तुल्य सन्तानदर्शनात्।" पौत्रदौहित्रयोस्तु सद्भावे पौत्रस्यैवाधिकारः पुत्रेण परिणीतदुहितुर्बाधात्। बाधकपुत्रेण बाध्यादुहितृपुत्रबाधस्य न्याय्यत्वात्। उक्तानां सर्व्वेषान्तु दौहित्रपर्य्यन्तानामभावे वंध्याविधवयोरपि मातृधनाधिकारिता। तयोरपि तत्र आत्मात्मजायाअभावे चान्येषामधिकारः। यत्तु दुहितृमात्राधिकारार्थं गौतमवचनम्।

स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानाञ्च। यच्च नारदस्य मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयः। यच्च कात्यायनस्यापि। दुहितॄणामभावे तु रिक्थं पुत्रे तु तद्भवेत्। यच्च याज्ञवल्क्यस्य मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वयः। तानि पूर्व्वोक्त देवलवचनविरोधेन यौतकद्रव्यविषयाणि ॥ ० ॥

अतएव पार्व्वणपिण्डदानादेव उपकारान्तरमपि हेतुमाह दौहित्रोऽपीति। स्वसन्तया साक्षात्स्वजन्यसन्तया स्वपुत्र द्वारेण। चहेतौ। यद्यपि पुत्रवतीनामपि स्वसन्तया पिण्ड दानाभावः। तथापि दृष्टान्तार्थं तदुक्तिः यतः स्वपुत्रद्वारेण तस्योपकारकतया दुहितॄणामधिकारः अतएव नारदेन सन्तानदर्शनन्दुहितृधिकारे हेतुतया निर्द्दिष्टमित्याह। अत एवेति पुत्रेणेति। एतेन यौतकधने दौहित्रस्यादावधिकारः सूचितः तत्र पुत्रस्यैवोढाबाध्यत्वादिति बोध्यम्। दौहित्रपर्य्यन्तानामिति प्रपौत्रपर्य्यन्तोपलक्षणम्। दौहित्रानन्तरं महोपकारकत्वेन तस्यैवाधिकारात्। तयोरपीति। एतेन पूर्व्वं पत्न्योरनधिकारकथनं तदुक्तपर्य्यन्ताभावे ज्ञेयं यौगपद्या

धिकारे केवलकन्याधिकारबोधकवचनविरोधपरिहर्तुमादौ तद्वचनान्याह । यस्त्विति । नचात्र विनिगमकाभावः । देवला दिवचनानां यौतकविषयत्वमनन्तरोक्तमन्यैः गौतमादिवच नानां अयौतकविषयत्वमित्यस्यापि सम्भवादतोमनुवचनै कमूलकत्वं विनिगमकमाह ॥ ० ॥

अतएव मनुः मातुस्तु यौतकं यत्स्यात्कुमारीभाग एव सः यौतकम्परिणयनलब्धं युमिश्रणइति धातो र्युतइतिपदं मिश्रतावचनं मिश्रता च स्त्रीपुरुषयोरे कता विवाहाच्च तद्भवति ।

अस्थिभिरस्थीनि मांसैर्मांसानि त्वचा त्वचमिति श्रुतेः । अतोविवाहकाले लब्धं यौतकं ।

अतएव वशिष्ठः । मातुः पारिणाय्यं स्त्रियो विभजेरन् । पारिणाय्यम्परिणयनलब्धन्धनम् यत्तु मनुवचनं स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं कथञ्चन । ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेत् । अत्र पित्रा दत्तमिति विशेषणाद्विवाह समयादन्यत्रापि यत्पितृदत्तं तत्कन्यायाएवेत्ये तदर्थं ब्राह्मणीपदस्यानुवादः । यद्वा ब्राह्मणी पदस्य चानर्थक्यभयात्क्षत्रियादिस्त्रीणामनपत्यानां

पितृदत्तं धनं सपत्नीदुहिता ब्राह्मणी कन्या हरेत् न पुनरप्रजास्त्रीधनम्भर्त्तुरिति वचनावकाश इति वचनार्थः ॥ ० ॥

अतएवेति । यतएव केवलयौतकएव प्रथमं कुमार्य्यधिकारः अतएव मनुना कुमार्य्यधिकारे यौतकपदमभिहितमिति भावः । अस्थिभिरिति । कन्यास्थिभिर्व्वरास्त्रीन्यैकतामाप्नुवन्तीत्यर्थः । एवमन्यत्रापि । यतो विवाहसमयलब्धमेव यौतकम् । अतोऽत्र वशिष्ठेनापि पारिणाय्यपदमुक्तम् । अन्यथा मूलान्तरकल्पनापत्तेरित्याह । अतएवेति । अतएव पारिणाय्यपदमपि विवाहसमयलब्धपरमेव । न तु कल्पतरुप्रभृतिभिरुक्तं यत् परिच्छदादर्शकङ्कतिकादिरूपम्पारिणाय्यं तत्परम् । तथात्वे श्रुतिभेदकल्पनापातात् । परिणयनशब्दस्य विवाहे रूढत्वाच्च । विवाहसमयादन्यत्रापीति । तथाच पित्रा दत्तं यौतकमयौतकं वा तत्सर्व्वं कन्याया एवेत्येतदोधनार्थमेतद्वचनम् । मातुश्च यौतकं यत्स्यादिति पूर्व्ववचनन्तु यौतुकसामान्ये कन्यामात्राधिकारार्थमिति नान्यतरवैययर्थ्यमिति बोध्यम् । कन्याया एवेति । एवकारेण पुत्रनिरासः । ब्राह्मणीपदस्यानुवादत्वे वैयर्थ्यमाशङ्क्याह । यद्वेति । नच ब्राह्मणीकन्याया अधिकारावगमात् स्त्रीपदं ब्राह्मणीपरमस्तु

क्षत्रियादिपरत्वे कन्यापदस्यामुख्यतापत्तेरिति वाच्यं । अनूढात्वेनैव कन्यापदस्य सपत्नीकन्याबोधकतया अमुख्यत्वाप्रसक्तेः तद्रूपेणैव कन्यापदस्य शक्तेः । आनर्थक्यभयादिति । नच आनर्थक्यभयात्परिसङ्ख्यैवास्तु तथाच ब्राह्मणी एव हरेन्नान्येति परिसङ्ख्यया क्षत्रियादेः पितृदत्तयौतके सत्यामपि कन्यायां पुत्राणामेवाधिकार इति वाच्यं । स्वार्थहान्यादिदोषत्रयापत्तेः एतदपेक्षया कन्यापदस्य अजहत्स्वार्थलक्षणया सपत्नीकन्यापरत्वस्यैव न्याय्यत्वादिति ब्राह्मणीपदमुत्तमजातिमात्रपरत्वेन वैश्यायामपि तथाविधायाः पितृदत्तधनं क्षत्रिया गृह्णीयादिति मिताक्षराव्याख्यानन्तु प्रमाणाभावादुपेक्षणीयमिति ॥ ० ॥

अन्यथा सकलवचनानामसामंजस्यं स्यात् नच वाच्यम् । नारदादिभिर्दुहितुरभावे दुहितुः पुत्राणामेव धनाधिकारो दर्शितः प्रत्यासन्नदुहितृपदेनैवान्वयपदस्यान्वयादिति । यतो दुहितृपदस्य(न्वयपदस्य च)जन्यविशेषपरत्वेन जनकाकाङ्क्षितत्वात् न जन्यांतरेणान्वयपदोपात्तेन पुत्रेणान्वयः सम्भवति समत्वात् नचाधिष्ठानलक्षणयान्वयो वाच्यः ॥ ० ॥

अन्वयेति । पूर्व्वव्याख्याने इत्यर्थः । सकलवचनानामिति । मिलदसाधारणयौतकधनसामान्ये, कन्यापुत्रयोस्तुल्यवदधिकारबोधकवचनानामित्यर्थः । नारदादिवाक्येऽन्वयपदं सन्निहितत्वाद्दुहितृवर्ज्यदौहित्रपरं। तथाच सत्यपि पुत्रे दुहित्रभावे दौहित्रस्यैव यौतकधनाधिकार इति केषाञ्चिन्मतमपाकर्त्तुमाह । नच वाच्यमिति । अन्यविशेषेति । विशेषः स्त्रीरूपः जनकाकाङ्क्षितत्वात् । जनकमात्राकाङ्क्षितत्वात् अन्यतयोपस्थितनिराकाङ्क्षितत्वादिति यावत् अन्यान्तरेण अन्यतयोपस्थितेन । तयोपस्थितिं समर्थयति । अन्वयपदोपात्तेनेति । पूर्व्वसत्वपूर्व्वासत्वविशिष्टसत्वरूपयोः साध्यत्वसाधनत्वयोर्विरोधेन एकस्मिन् धर्म्मिण्येकदा तदुभयबोधासम्भवादिति भावः । अन्वयपदस्यापि दुहित्रन्वये निराकाङ्क्षत्वमाह । समत्वादिति । द्वयोरेव जनकमात्रमाकाङ्क्षतया तुल्यत्वादित्यर्थः अधिष्ठाने । अन्वत्वांशमपहाय दुहितृपदस्य स्त्रीत्वेन अन्वयपदस्य च पुंस्त्वेन रूपेण लक्षणेत्यर्थः । अन्वयोवाच्य इति । जन्यत्वेनानुपस्थित्या परस्परनिराकाङ्क्षत्वविरहादिति भावः ॥ ० ॥

अन्वयेनैव सर्व्वेषां मुख्यत्वसम्भवात् । मातृपदान्वये च दुहितृपदस्य मुख्यत्वस्वीकारात् । नच तदन्वय इति तच्छब्दोपात्तायादुहितुरन्वययोग्यता

वाच्या। तच्छब्दस्यापि प्रक्रान्तवाचितया दुहितृत्व रूपेणैवोपपादकत्वात्। किञ्च याज्ञवल्क्यवचने दुहितर इति पदं प्रथमान्तान्तम्भ्य इति पदञ्चषष्ठ्यन्तमन्वयपदेन षष्ठ्यन्ताम्वययोग्येनान्वीयते। किन्तु व्यवहितमपि मातुरित्येव पदमन्वयि तदत्र मातुरन्वये निश्चिते नारदकात्यायनवाक्येऽपि मातुरेवान्वयोन्याय्यः। अविरोधात्॥०॥

सर्व्वेषामिति। दुहितृपदान्वयपदकात्यायनोक्तपुत्रपदानामित्यर्थः। मुख्यत्वस्वीकारादिति। तथाच मातुरन्वयार्थं मुख्यस्य दुहितृपदस्यान्वयपदार्थान्वयार्थं न पुनर्लक्षणा युगपद्वृत्तिद्वयविरोधादिति भावः। तच्छब्दोपात्तायाइति। तदो बुद्धिस्थत्वेनैवोपस्थितायाइत्यर्थः। दुहितृत्वरूपेणेति तथाच तदादेर्विशेषरूपेणैव बोधकत्वं न बुद्धिस्थत्वे सामान्येनेति निराकाङ्क्षत्वं तदवस्थमिति भावः। नन्वन्वयपदार्थस्य मातुरित्यनेनान्वये तत्पदवैयर्थ्यम्॥ नच तत्पदोपस्थितायाएव मातुरन्वयोवाच्यः मातुर्विशेषणत्वेनाप्रधानतया तदोपरामर्षाभावात्॥ तदा विशेष्यपरामर्षस्यौत्सर्गिकत्वात्तथाच प्रधानीभूतदुहितुरेव परामृष्टायाअन्वये नोऽन्वयो वाच्यः नच अन्यत्वेनोपस्थितायादुहितुर्जनकत्वान्वये विरोधः

एकनिरूपितजन्यजनकतयोरेवैकस्मिन्नभिथि विरोधेन नाना नभ्युपगमात् इह तु मातृपेक्षया अन्वलमन्वयपदार्थापेक्षया जनकत्वं दुहितुरिति निरूपकभेदात् । अतएव दुहितुश्चैव च पुत्रादौहित्रास्ते प्रकीर्त्तिता इत्यादिवचनेषु दुहितुः पुत्रा इति सङ्गच्छते इत्यप्याह दुहित्रन्वये निर्णीते तदेकश्रुतिमूल तया यत्र तत्पदं नास्ति तत्रापि वचने दुहित्रन्वयएव वाच्य इत्यत आह । किञ्चेति । किन्त्विति षष्ठ्यन्तमुपेक्ष्य षष्ठ्यन्त विपरिणामेन नान्वयो गौरवादिति भावः । अविरोधा दिति । एकश्रुतिमूलत्वेऽविरोधादित्यर्थः । ननु तथापि नारदवचने मातुरन्वये तत्पदवैयर्थ्यापातादरं याज्ञवल्क्य वचने षष्ठ्यन्तविपरिणामेन दुहितुरेवान्वयो न्याय्य इत्यत आह ॥ ० ॥

किञ्चासत्वङ्गजेषु तद्गामी ह्यर्थो भवतीति बौधायनवचनानुसारेणानन्तर्य्यात्त्वाङ्गजपुत्रस्याधिकारो न्याय्यो नानङ्गजव्यवहितदौहित्राधिकारः । ततश्च परिणयनलब्धस्त्रीधनन्दुहितुरेव न पुत्राणाम् । तत्रैव च क्रमार्थं गौतमवचनम् ।

स्त्रीधनन्दुहितृणामप्रत्तानामप्रतिष्ठितानाञ्च । प्रथममप्रत्तानान्तदभावे च समूढानां स्त्रीधनन्दुहितृणामिति सामान्यतः प्राप्तत्वादप्रत्तानामित्यादेस्तु क्रमार्थत्वात् ॥ ० ॥

स्त्रियेति । तथाच बौधायनस्य सद्योवचनं चाप्रत्त स्त्रीकर्त्तृकत्वान्तविपरिणामेनान्वयकथनं चापेक्ष्य तत्परत्वा त्पुत्रप्रयासनिरासार्थमनुवाद एव न्याय्य इति भावः । यैन कथनं सर्व्वाभावस्तु दुहितॄणामेव तदभावे पुत्रस्य इत्युपसंहरति । ततश्चेति । न पुत्राणामिति दुहितरि सत्यामिति शेषः । तत्रैव दुहित्रधिकारविषय एव क्रमार्थम् । कुमारीणां वाग्दत्ताना मूढानाञ्च क्रमेणाधिकारार्थं । प्रथममिति । अप्रत्ता अथवा ग्दत्ता । प्रत्ता वाग्दत्ता । चकारलभ्यार्थमाह । असमूढाना मिति । ननु युगपदेवाप्रत्तादीनामधिकारस्य वचनार्थत्व संभवात्कथं क्रमकल्पनेत्यत आह । दुहितॄणामितीति । क्रमार्थ त्वे क्रमिकाधिकारित्वेन । यः सामान्यप्राप्ताधिकारस्य उप संहारबाधसाद्रूप्यार्थत्वात् तत्प्रयोजनवत्त्वादित्यर्थः । उप संहारोऽर्थो यस्येति बहुव्रीहिणा उक्तार्थलाभात् । उपसंहार समर्थादिति पाठे सम्यगर्थः प्रयोजनं यस्येति पूर्व्वोक्त एवार्थः । तथाच प्रथमं कुमार्य्यास्तदभावे वाग्दत्तायाः । सगोत्रत्वेन तस्या ऊढापेक्षया बलवत्त्वात् । तदभावे समूढायाः तत्रापि पुत्रवतीसम्भावितपुत्रयोः तदभावेऽन्यस्या इति क्रमः । नच चकारश्रुतेरप्रत्तादीनां युगपदधिकारो रत्नाकरसंमतो युक्त इति वाच्यम् । मातुश्च यौतकं यत् स्यात् कुमारीभाग एव स इतिमनुवचने निरपेक्षकुमारीभागश्रवणादेवकारश्रव

पुरुषार्थत्वन्द्रव्यार्जनस्य द्रव्यस्य भोजनस्य च चीयतइति तन्मन्दतरम्। प्रणाल्या ज्योतिष्टोमो पकारकत्वेऽपि भोजनस्य साक्षात् तृप्त्यर्थत्वात्। पुरुषार्थस्यैव स्वतः क्रतूपकारकत्वात्तच्चेदमर्थे प्रमाणाभावात्। उपकारकत्वस्य तादर्थ्यव्यभिचारात्। अतः कथं द्रव्यार्जनस्य च क्रत्वर्थत्वमापद्यतइति। अतएवास्यापि पर्य्यनुयोगस्यानवकाशः यदि द्रव्यस्य प्रतिग्रहे प्राचीनभोजनद्वारा प्रतिग्रहोपकारकत्वमिष्यते। तदा जन्मतआरभ्य भोजनं विना शरीरावस्थितेरभावात् नार्जनं सम्भवतीति। सर्व्वएव धनोपायः पितृद्रव्यविनाशेन स्यात्। अतोऽनुपघ्नन् पितृद्रव्यमिति विशेषणं न स्यादिति यतोविशेषणानर्थक्यादेव भक्षणाद्युपभोगोपयुक्तधनोपघातादन्यस्यैवोपचारादिरूपस्य वचनार्थत्वात्॥०॥

उक्तमर्थमतिबन्धिमुखेन श्रीकरोदूषयति। तदित्यादि चीयतेइत्यन्तेन। उपकारकत्वेऽपि नान्तरीयकविधयाउपकारकत्वेऽपि। तृप्त्यर्थत्वादिति। तथाच पुरुषार्थत्वम्पुरुषोद्देश्य प्रत्यक्षफलसाधकत्वं। क्रत्वर्थत्वं क्रतूद्देश्यकत्वं इति न पुन

मोचनस्य फलार्थत्वं फलोद्देश्यकत्वाभावादिति भावः। ऐदमर्थ्ये इदमर्थकत्वे फलोद्देश्यकत्व इति यावत्। ननु तदुपकारकत्व मेव तदुद्देश्यकत्वे प्रमाणमत आह। उपकारकत्वेति। व्यभिचारादिति। अन्यावलोकनार्थानीतदीपादितोऽन्यालोकनादौ व्यभिचारादित्यर्थः। अतएवेति। यत उपकारकत्वेऽपि न तदर्थत्वमत एवेत्यर्थः। पर्य्यनुयोगस्य दोषोद्भावनस्य हेत्वन्तरमाह। यतइति। केचित्तु अतएव वक्ष्यमाणहेतोरेव तमाह यतइत्याहुः। अतइति। विशेषणानर्थक्यादेतोर्हेतोरित्यर्थः। ननु भक्षणादित्यादिपदद्वयस्यानानुगमकत्वात् इतमात्रस्यादिपदयोस्त्वेऽपि यत्र बहुतरव्ययेन औषधमुत्पाद्य तद्भक्षणेन नदीपर्व्वतलङ्घनमक्लिष्टा बहुतरधनमर्जितन्तस्याविभाज्यता स्यादत आह॥०॥

किञ्च भक्षणाद्युपभोगार्थधनोपघातस्य गृहगतेनाप्यवश्यं कर्त्तव्यत्वान्न धनार्जनार्थत्वमुपघातस्य तादर्थ्यमेव च प्रयोजकमिति नातिप्रसक्तिः। अतएवोक्तं विश्वरूपेण पितृद्रव्यन्त्वा यदि नोपार्जितन्धनन्तदा तस्यैवासाधारणं वैवाहिकवदेवोक्तम् नतु भक्षणाद्युपभोगमात्रेण तस्य स्तनपानादितुल्यत्वादित्यन्तेन। अतएव पुत्रो

पनयनविवाहयोः सोत्सुकसव्ययपितृकृतबहुतर धनव्ययेऽपि न व्रतभिक्षादिलब्धस्य वैवाहिकस्य वासाधारण्यम् । धनप्रेक्षया धनव्ययस्याकृतत्वात्तस्माद्धनोद्देशेनैव साधारणधनोपघातार्जितं साधारणं नान्यदिति सिद्धम् । जितेन्द्रियेणापि बहुप्रकारं विमृश्योक्तम् । तदस्य यावदुक्तप्रपञ्चस्य संक्षेपेणायमर्थः प्रत्येतव्यः । यत्किञ्चिद्धनमसाधारणधनोपघातार्जितन्तदसाधारणं । यत्किञ्चिद्धनं साधारणोपार्जितन्तत्साधारणं विस्पष्टार्थन्तु विद्याधनन्तु यद्यस्येत्यादिनोदाहरणप्रपञ्चेनोपन्यस्तम् ॥ ० ॥

किञ्चेति । तादर्थ्यमेवेति तथा चोपकारकत्वस्य प्रामाणिकत्वे नापह्नापयितुमशक्यत्वात्तादर्थ्यमेवोपघातस्य विशेषणमिति भावः । एतेनानुपघ्नन् पितृद्रव्यमित्यादेरर्जनोद्देशेन धनोपघातं विना यदर्जितमित्येवार्थ इति बोध्यम् । अत्र हेतुमाह । अत एवेति । यतस्तादर्थ्यं विवक्षितं नोपकारकत्वमत एवेत्यर्थः । इत्यनेन तादर्थ्यं व्यक्तमेव तेनाभिहितमिति भावः । स्वयमपि लोकाचारप्रमाणं दर्शयति । अत एवेति । उपनयनेति व्रतभिक्षा ब्रह्मचर्यभिक्षा आदिना समावर्त्त

गोत्रस्य राजप्रसादलब्धमित्यापरियतः । तथा चोक्तम् । आह स्थानां गुरुकुलादिप्राणाम्बुजकोभवेत् । नृपाणामनयोस्त्वेष विधिर्ग्रासोऽभिधीयतइति । वैवाहिकस्य विवाहे श्वशुरादितो लब्धस्य । तत्रापि धनव्ययस्य कथं न धनार्जनार्थत्वमतआह । धनप्रेप्सयेति । उपसंहरति । तस्मादिति । असाधारणधन शरीरायासाभ्यां यदर्जितन्तदविभाज्यत्वे प्राक् स्वयमभिहिते जितेन्द्रियसम्बादमप्याह । जितेन्द्रियेणापीति । तदुक्तमाह तदस्येति । असाधारणोपार्जितं साधारणधनानुपघातेन स्वयमेवार्जितमुपन्यस्तविद्याधनादिकमितिशेषः । एतेषु प्राये णासाधारण्यसम्भवादिति भावः ॥ ० ॥

असाधारणत्वादेवाविभाज्यमप्येवंविधन्धनं साधारणमपि साधारणहेतुसमुत्थमेकविधमेव । तदपि सुखावबोधार्थं । क्वचिदर्थसाधारण्येन क्वचिच्च व्यापारवत्त्वेन सम्बन्धसाधारण्येन च प्रदर्शितमित्यन्तेन । बालकेनाप्युक्तं एकेन भ्रात्रा विद्यादिना लब्धेऽपरेषामधिकारसम्भवः प्रमाणाभावादित्यन्तेन । यस्त्वानुपघातप्रतिग्रहा र्ज्जितधनस्य विभागः शिष्टानां दृश्यते स भ्रातृस्नेहेन पौरुषबुद्ध्या वा नानुपपन्नः । यदा प्रतिग्रह

धनस्य विद्याधनत्वाद्विद्याधनेन च साधारण धनानुपघातार्जितेऽपि समविद्याधिकविद्यानां विभागस्य वाचनिकत्वात्तद्विभागमपश्यन्तोविद्या धनस्य विद्याविशेषकृतोऽयं विभागइत्यजानन्तोऽविभक्तार्जितत्वेनायं विभागइति भ्रान्ताः। स्वयमपि तथैव व्यवहृतवन्तः। एतन्मूलश्चापरापरव्यवहार इति न किञ्चिदनुचितं ॥०॥

एवंविधमेव विद्याशौर्य्यादिलब्धमेव । साधारणमपीति साधारणधनसमत्वं एवंविधमपि साधारणमेवेति । अपेव शब्दयोर्वैपरीत्येन योजना कार्य्या अन्यथा क्रमागतस्यापि साधारणत्वेन एवंविधमेव साधारणमिति यथाश्रुतासङ्गतेः। सुखावबोधार्थं विशेषरूपेण शीघ्रबोधार्थम् । अर्थसाधारण्येति। यथा साधारणं समाश्रित्येत्यादि व्यापारसाधारण्यं यथा अविद्यानान्तु सर्व्वेषामीहातश्चेद्धनं भवेत् । समस्तेष विभागः स्यादपित्र्यइति धारणादित्यादि सम्बन्धसाधारण्यं यथा ऊर्द्ध पितुश्च मातुश्चेत्यादि । इत्यश्च यत्रामुकपुत्रत्वपुरस्कारेणैकस्मै दत्तम् तत्र सर्व्वेषामेव तत्पुत्राणामधिकार इति प्रतिपन्नम्। प्रदर्शितं मुनिभिरिति शेषः। इत्यन्तेनेति। विस्तरोक्तमिति पूर्व्वेणान्वयः । उक्तार्थे समादानमाह।

बालकेनापीति। विद्यादिना सर्व्वे स्वधारणानुपघातेन इतर धनापारनैरपेक्षेण चार्जिते। ननु भ्रातृस्नेहेन पैतृकबुद्ध्या वा दाने न्यूनाधिकस्य सम्भवात्। कथं समतया प्रतिनियतो विभाग इत्यत आह। यदिति। विद्याविशेषेति। विद्यार्जित धनस्य योविशेषः समाधिकविद्यानां विभाज्यत्वरूपः तत्कृतोऽयं विभाग इत्यज्ञानमूलक इत्यर्थः॥०॥

यत्पुनर्मनुवचनम्॥ यत्किञ्चित्पितरि प्रेते धनं ज्येष्ठोऽधिगच्छति। भागोयवीयसान्तत्र यदि विद्यानुपालिनः। तस्यायमर्थः। पितेव पालयेत्पुत्रान् ज्येष्ठोभ्रातृन् यवीयसः। पुत्रवच्चानुवर्त्तेरन् ज्येष्ठे भ्रातरि धर्म्मतः। एतस्माद्वचनात्पितापुत्रवद्धस्थानात्पित्रर्जितइवानुपघातार्जितेऽपि ज्येष्ठधने कनिष्ठानामधिकारः। एतावान् परं विशेषः। पित्रर्जितेऽविदुषामप्यधिकारोज्येष्ठार्जितेपुनर्विदुषामेव एतच्च पितरि प्रेतइति ज्येष्ठइति जवीयसामिति विद्यानुपालिनइतिपदप्रयोगस्यानर्थक्यात्सिध्यति। तस्मादविभक्तार्जितत्वमात्रेणाविभक्तभ्रात्रन्तरस्य भवतीत्यसङ्गतं वचनम्॥ तत्र विद्याधनं तावदभिधीयते॥

कुसीदाभिवृद्ध्यर्थमाह ॥ तथेति ॥ तत्र तैर्व्वविभाज्यमानेषु मध्ये । यथेतिपाठे पश्चिमवचनेतिवार्थः ॥ यमन्यत्रेति । एतदर्थं स्वयमेव व्याख्यास्यति ॥ ० ॥

शिष्येष्वपि हि धर्मोऽयं मूल्याद्यार्त्विकं भवेत्। परं निरस्य यल्लब्धं विद्यया द्यूतपूर्व्वकं । विद्या धनन्तु तद्विद्यान्न विभाज्यं बृहस्पतिः । यदि भवान्प्र श्नकमुपन्यस्यति तदा भवते मया एतावद्देयमिति पणितम् । यत्रोपन्यासन्निस्तीर्य्य लभते तत्र विभा ज्यम् । शिष्यादध्यापितादार्त्विज्यतः यजमानाद्द क्षिणादिना लब्धन्दक्षिणा च न प्रतिग्रहोऽवेतनरूप त्वात्तस्याः तथा यत्किञ्चिद्विद्यायां प्रश्ने निस्तीर्णे अपणितमेव यदि कश्चित्परितोषाद्ददाति । तथा योऽस्मिन् शास्त्रार्थे मम संशयमपनयति तस्मै सुवर्णमिदन्ददानीत्युपस्थितस्य संशयमपनीय यल्लब्धं वादिनोर्व्वादसन्देहे न्यायकरणार्थमागतयोः सम्यङ्निरूपणेन लब्धं षडङ्गादिकन्तया शास्त्रादिषु प्रकृष्टज्ञानं विभाव्य यत्प्रतिग्रहा दिना लब्धन्तया द्वयोः शास्त्रविज्ञानविवादेऽन्य त्रापि वा कुत्रचिदन्योन्यज्ञानविवादे निर्जित्य

तदयमर्थो यया कयाचिद्विद्यया यल्लब्धमर्जकस्यैव तन्नेतरेषाम्प्रदर्शनार्थं तु कात्यायनेन विस्तरेणोक्तम् । श्रीकरादिभ्रमनिरासार्थं । अतः स्वज्ञानख्यापनादिना यत्प्रतिग्रहलब्धन्तदपि विद्याधनमेव । विद्ययैव विदुषे प्रतिग्रहदानात् ।

तथा यमः । विद्यायुक्तो धर्मशीलः प्रशान्तः क्षान्तो दान्तः सत्यवादी कृतज्ञः । वृत्तिग्लानो गोहितो गोशरण्यो दाता यज्वा ब्राह्मणः पात्रमाहुः । अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् । नैषां प्रतिग्रहो देयो न शिला तारयेच्छिलाम् । विदुषामेव पात्रत्वादविदुषाञ्चापात्रत्वादतो यत्केनचिदुक्तम् । विद्याधनन्तु विद्याध्यापननिमित्तं यत्तदुच्यते इति तदुक्तवचनादर्शनेनेति हेयमेव । तस्माद्विद्याशब्दस्य विद ज्ञाने इत्यस्माद्धातोर्निष्पत्तेः ॥ ० ॥

सर्व्वानुगमकमाह । तदयमिति । तर्हि एतदेव मुनेरभिधानमुचितं किं विस्तरेणेत्यत आह । प्रदर्शनार्थमिति । अनुपघातार्जितविद्याधनोदाहरणार्थमित्यर्थः । श्रीकरादीति । अविभक्तार्जितत्वमात्रेणैव विभाज्यत्वमिति तेषां भ्रमः तन्मूलकस्य परेषामप्येवंविधभ्रमस्य निरासार्थमित्यर्थः । अतइति

कात्यायनेन विद्याधनस्य मध्ये पठितत्वादित्यर्थः । विद्याधन नैवेति । तेनाच समाधिकविषयोरेव भागो नेतरेषामिति भावः ।प्रतिग्रहधने विद्याधनपदस्य यौगिकत्वमाह । विद्ययैवेति । प्रमाणमाह । तथा यमइति । धर्मयुक्तः नित्यनैमित्तिक स्वधर्मात्यागी । प्रशान्तः स्वल्पलाभेनापि सन्तुष्टः । क्षान्तः केनापि पीडितोऽपि समर्थः सन् तत्पीडापराङ्मुखः । दान्तः इन्द्रियादिदमनशीलः कृतज्ञः प्रत्युपकारे सयत्नः वृत्तिमानः शिलोञ्छादिवृत्तिः वृत्तिहीनो वा गोष्ठितो गोब्राह्मणार्थं शरण्यो व्याघ्रादितो दुर्गाच्च परित्रायकः । आज्ञरित्याज्ञः । तदुच्यते तस्मात्प्रमुच्यते उक्तवचनादर्शनेन कात्यायनवचना दर्शनेन । विद्याधनइति । तेन शिल्पधूतादिलब्धस्यापि ग्रहणमित्युक्तम् ॥ ० ॥

ज्ञानमात्रवचनात् यच्च प्रतिग्रहधनस्यापि विद्याधनत्वेन याजनाध्यापनप्रतिग्रहाणां सङ्कीर्ण त्वमापादितं श्रीकरेण तदतिमन्दम्। विद्याधनत्व सामान्यस्य याजनाध्यापन प्रतिग्रहादिनानाव्यक्ति सम्बन्धेऽपि व्यक्तीनामसङ्कीर्णत्वात्तदापि याजना ध्यापनस्याप्रतिग्रहत्वात्। गोत्वसमवायेऽपि नील कपिलकापोतिकादिव्यक्तीनामसङ्कीर्णत्वस्याविवा

दात्। अतएव शिष्यादार्त्विज्यतः प्राप्तयोर्विद्याधनत्वं स्मरन्मुनिर्याजनाध्यापनयोः सङ्करात् कथं न बिभेति। अतः पक्षग्रहणमात्रेण तदभिधानमिति ध्येयम्। शौर्य्यादिधनमाह।

कात्यायनः। आरुह्य संशयं यत्र प्रसभं कर्म्म कुर्व्वते। तस्मिन् कर्म्मणि तुष्टेन प्रसादः स्वामिना कृतः। तत्र लब्धन्तु यत्किञ्चिद्धनं शौर्य्येण तद्भवेत्। ध्वजाहृतम्भवेद्यत्तु विभाज्यं नैव तद्भवेत्। संग्रामादाहृतं यत्तु विजित्य द्विषतां कुलम्। स्वाम्यर्थं जीवितन्त्यक्त्वा तद्ध्वजाहृतमुच्यते॥०॥

सङ्कीर्णत्वमिति। सङ्कीर्णत्वमभेदः तथाहि याजनस्य विद्याधनत्वं विद्ययैवार्त्विज्यकरणात् एवमध्यापनप्रतिग्रहयोरपीति त्रयाणामेव विद्याधनत्वेन परस्परभेदाभावइति श्रीकरादयः। व्यक्तीनामिति। तथाच याजनादीनां विद्याधनत्वाविशेषेऽपि याजनत्वादिना परस्परभेदसत्त्वान्न सङ्कीर्णत्वमिति भावः। गोत्वेति। यथा नीलकपिलगोव्यक्तीनां गोत्वाविशेषेऽपि परमसङ्कीर्णत्वं विशेषरूपेण भेदसत्त्वात्तदित्यर्थः। अतएव सामान्यरूपाणामपि विशेषतोभेदसत्त्वादेव। कथमिति। केनापि प्रकारेण न बिभेतीत्यर्थः। पक्षग्रहणेति। पूर्व्वपक्षग्रहण

मात्रेणेत्यर्थः। तदभिधानं तच्छौर्य्याभिधानम्। एवमिति। यतः पूर्व्वपक्षवचनवत् सिद्धान्तवचनमादृतो हेयमित्यर्थः। यद्वा पक्षपञ्चमाचेण याजनादिना अर्ज्जकस्य पञ्चपञ्चमाचेणापत्तिमुखेन याजनादिधने विद्याधनत्वनिरासेन न तत्र समाधिकविद्ययोर्भागनिरासस्तत्पक्षपञ्चकस्य स्फुटत्वात्तदभिधानमप्याश्रितस्तदभिधानं अतो हेयमित्यर्थः। संशयमाहत्व उत्कटसम्भावनाविषयमरणमप्यङ्गीकृत्य तत्र लब्धस्तस्मिन्प्रसादे सति लब्धम्। तत् ध्वजाहृतमिति। यद्यप्येतस्यापि शौर्य्यधनत्वेनैव अविभाज्यत्वस्य सिद्धेः पृथग्विधानं व्यर्थन्तथापि ध्वजाहृतपरिभाषायां व्युत्पादनार्थमेव तद्वचनारम्भ इति बोध्यम्॥०॥

वैवाहिकन्तु तद्विद्याद्भार्य्यया यत्समागतं। भार्य्याप्राप्तिकाले लब्धमित्यर्थः। तथाऽपरमविभाज्यमाहतुर्म्मनुविष्णू वस्त्रं पत्रमलङ्कारं कृतान्नमुदकं स्त्रियः। योगक्षेमप्रचारञ्च न विभाज्यं प्रचक्षते। वस्त्रमङ्गयोजितं पङ्क्तिपरिच्छदार्थञ्च। पत्रं वाहनमश्वादि। अलङ्कारोऽङ्गुलीयकादि। कृतान्नं लड्डुकादि। उदकं कूपवापीजलं प्रचारोपयुक्तम्। स्त्रियो दासीव्यतिरिक्ताः। योगक्षेमप्रचारञ्च। शय्यासनभोजनाचमनाद्युपयुक्तभाजनादीनि।

तथा व्यासः। अविभाज्यं सगोत्राणामासहस्र कुलादपि। याज्यं क्षेत्रञ्च पत्रञ्च कृतान्नमुदकं स्त्रियः। याज्यं यागस्थानम्। देवता वा। नतु याजनलब्धधनं तस्य विद्याधनत्वेनैव गतार्थत्वात्।

तथा कात्यायनः। गोप्रचारश्च रथ्या च वस्त्रं यच्चाङ्गयोजितम्। प्रयोज्यं न विभाज्यन्तु शिल्पार्थं तु वृहस्पतिः। प्रयोज्यं यद्यस्य प्रयोजनार्थम्। यथा श्रुतादौ पुस्तकादि तन्मूर्खैर्न विभजनीयम्। शिल्पोपयुक्तञ्च शिल्पिनामेव नातद्विदाम्॥ ७॥

भार्य्याप्राप्तिकाल इति। उपलक्षणमेतत्। आमात्यपुरस्कारेणेत्यन्यदपि लब्धबोध्यम्। अङ्गयोजितमिति। तेन विक्रीयवस्त्राभरणं ऋणमुद्धाप्यमणपीति वृहस्पतिवचनमेतद्व्यतिरिक्तवस्तुपरं बहुमूल्यवस्त्रपरमित्यन्ये। प्रचारोपयुक्तं व्यवहारोपयुक्तेन यावद्भिर्य्यस्य निर्व्वाहस्तेन तावन्त्येव ग्राह्याणि नतु तत्र समांशनियम इति भावः। एकां स्त्री कारयेत्कर्म यथांशेन गृहे गृहे। इति वृहस्पतिना दासीविभागो बहुदासीव्यतिरिक्त इति। [illegible]ति। तथा च सर्व्वेषामेव व्यावहारिकवस्तुषु प्रत्येकनियतेषु तुल्यमूल्येषु वस्त्रालङ्कारा

दिषु च यत्तु यदस्य तत्तस्यैव न तेषां विभागइति तात्पर्य्यार्थः। न तन्मूर्खैरिति। एतच्च पुस्तकतुल्यमूल्यद्रव्यान्तरपरं पुस्तकम्पण्डितैरेव मूर्खैस्तु द्रव्यान्तरमेव ग्राह्यमतत्परं अन्यथा क्रमागतस्य पुस्तकमात्रधनस्य सत्त्वे तत्र मूर्खादीनामनधिकारे तेषां वृत्तिलोपापत्तेरिति बोध्यम् ॥०॥

तथा शङ्खलिखितौ न वास्तुविभागोनोदकपात्रालङ्कारानुपयुक्तस्त्रीवाससामपाम्प्रचारार्थानां विभागश्चेति प्रजापतिः। पितरि जीवति यस्मिन्वास्तौ येन गृहोद्यानादि कृतन्तत्तस्याविभाज्यम्। पितुरप्रतिषेधेनानुमतत्वात्। तथा पैतामहमपि द्रव्यं यच्चिरं नष्टमक्षमत्वादथ वा प्रतीकारपराङ्मुखतया इतरैरप्रतिकृतम्पित्रा स्वधनशरीरायासाभ्यां प्रतिकृतन्तत्पितुरेव न साधारणम्।

यथा मनुः। पैतृकं तु पिता द्रव्यमनवाप्तं यदाप्नुयात्। न तत्पुत्रैर्भजेत्सार्द्धमकामः स्वयमर्जितम्। पैतृकं द्रव्यं पुत्रैरनवाप्तमप्रतिकृतम्। अनवाप्यमिति अनवाप्येति च पाठावनाकरौ।

आह वृहस्पतिः। पैतामहं हृतम्पित्रा स्वशक्त्या यदुपार्जितम्। विद्याशौर्य्यादिना प्राप्तं तत्र स्वाम्यं पितुः

कृतम्। प्रदानं स्वेच्छया कुर्य्याद्भोगञ्चैव ततो धनात्। तदभावे तु तनयाः समांशाः परिकीर्त्तिताः। स्वशब्देत्यसाधारणधनशरीरव्यापारं दर्शयति। वचनद्वयेऽपि पितृपदमुपलक्षणम्। स्वयमर्जितमिति द्वेतोरभिधानात्। एवञ्च स्वार्जिताक्रमागतद्रव्यवदेव क्रमागतेऽप्येवंरूपे भूमिव्यतिरिक्ते व्यवस्था बोद्धव्या। भूमौ तु विशेषमाह।

शङ्खः। पूर्व्वनष्टान्तु योभूमिमेकएवोद्धरेत्क्रमात्। यथाभागम्भजन्त्यन्ये दत्वा भागन्तुरीयकम्। असाधारणधनशरीरव्यापारमेवकारेण दर्शयति तथापि। उद्धर्त्तुर्नासाधारण्यं॥०॥

अनुपयुक्तस्त्रीवाससामिति। अनुपयुक्तं मूर्खादीनाम्पुस्तकादि स्त्रीवाससी प्रागुक्ते। न वास्तुविभाग इति व्याचष्टे। पितरि जीवतीति। पुत्रैरनवाप्तमिति। अत्र पुत्रपदं सम्बन्धिमात्रोपलक्षणं अतएव वचनद्वये पितृपदमुपलक्षणमिति वक्ष्यते। पाठावनाकराविति। अनवाप्येतिपाठे अन्येषु निरसेष्वित्यध्याहारस्य अनवाप्यमिति पाठे तु अन्यैरशक्योद्धारमित्यर्थे लक्षणायाः प्रसक्तादिति भावः। तदभावे तु तनया इत्यत्र समांशाभिधानं विंशोद्धारं निरस्यति॥०॥

किन्तु प्रतिज्ञातभूमेश्चतुर्थांशोऽधिकस्तस्मै दातव्यः। भूमिपदसामर्थ्यात्तदविवक्षाकारणाभावादितिविभाज्याविभाज्यनिरूपणम् ॥

सम्प्रति विभागानन्तरजातस्य विभागः कथ्यते। तत्र मनुनारदौ ऊर्द्धं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम्। संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह यदि पिता पुत्रान्विभज्य स्वयञ्च यथाशास्त्रं भागं गृहीत्वा पुत्रैरसंसृष्टएव मृतः तदा विभागानन्तरं जातः पितृधनमेव गृह्णीयात्सएव तस्य भागः। अथ कैश्चित्पुत्रैः सह संसृष्टः पिता मृतः तदा संसृष्टेभ्योभागं गृह्णीयात्।

तथा गोतमः विभक्तजः पित्र्यमेव। विभागानन्तरं यस्य गर्भाधानं स विभक्तजः विभक्तेन जनितोगर्भाधानादृते जनकस्य जननव्यापाराभावात् अतोयद्यज्ञातगर्भायामेव स्त्रियां विभक्ताः पुत्रास्तदनन्तरं जातोभ्रातृभ्यएव भागं गृह्णीयात् न केवलमेकएव किन्तु बहवोऽपि विभक्तजाताः पित्र्यमेव धनं गृह्णीयुः॥०॥

अधिकरति । तथाच उद्धृतेऽनुद्धृतभूमेश्चतुर्थांशमधि कन्यत्वा तेन सह समं सर्व्वे समांशभागिन इति वचनार्थः। नतु अन्यदिति श्रवणात्तस्मै तुरीयांशमात्रदानं तथात्वे अनुद्ध र्त्तुरेकत्वे द्वित्वे वोद्धर्त्तुरेव स्वल्पप्राप्त्या विषमविभागत्वापत्तेरिति भावः। भूमिपदेति। भूमेश्चतुर्थांशमित्युक्तार्थे प्रमाणमेतत्। सम्प्रतीति । पूर्व्वजातविभागानन्तरमित्यर्थः । यथाशास्त्रमित्य नेन शास्त्रानभिज्ञतया यदि पिता स्वयं स्वल्पं गृहीत्वा विभ क्तस्तदा विभक्तजस्य भ्रातृभ्योविभागग्रहणं ध्वनितम् । अत इति । यतोविभागानन्तराहितगर्भस्य जातस्यैव विभक्तजत्व मतइत्यर्थः।भ्रातृभ्यइति। एतच्च यदा पिता स्वयांशं गृहीत्वा अवशिष्टं पुत्रेभ्योदत्वा विभक्तएव तिष्ठति तदा बोध्यम् । पितृ मरणे तु पितृभ्रातृभागानेकत्रीकृत्य यथाशास्त्रं सर्व्वैर्वि भाज्यमिति । चूडामणिस्तु । पितरि जीवत्यपि तद्गृहीतद्रव्या देरशास्त्रीयतया सर्व्वमिश्रणेन पुनर्विभागइत्याह । अत्र ज्ञातगर्भायास्तु यदि गर्भस्थस्य भागः प्रागेव विवक्षितस्तदा पित्र्यभागं विभक्तजाभावे सर्व्वएव विभजेयुः । अथ पित्रैव सद्गर्भस्थं निश्चित्यापि प्रभुतया पुत्रेभ्योभागोदत्तः तदा तेषामेव तत्र स्वाम्यात् न तत्र गर्भस्याधिकारः किन्तु पित्र्य एवेति विभक्तजसत्त्वे तु तेन सह तुल्यांशितेति बोध्यम् ॥ ० ॥

यथा बृहस्पतिः । पित्रा सह विभक्ता ये सापत्ना वा सहोदराः । जघन्यजाश्च ये तेषाम्पितृभागहरास्तु ते । अनीशः पूर्व्वजः पित्र्ये भ्रातृभागे विभक्तजः । विभागात्पूर्व्वं जातः पित्रे धनेऽनधिकारी विभक्तजश्च भ्रातृधने ।

तथा । पुत्रैः सह विभक्तेन पित्रा यत्स्वयमर्जितम् । विभक्तजस्य तत्सर्व्वमनीशाः पूर्व्वजाः स्मृताः । यथा धने तथर्णेऽपि दानाधानक्रयेषु च । सर्व्व शब्दादकृतरमपि धनम्पित्रर्जितं विभक्तजस्यैव । परस्परमनीशास्ते त्यक्काशौचोदकक्रियाः । अशौचोदकक्रियामात्रप्रदर्शनेन सुदूरन्धनाधिकारं निरस्यति । इदञ्च पितृपात्तधनमात्रविषयम् । यदि तु पैतामहधनमपि भूम्यादिकं विभक्तन्तदा तद्धनविभागं भ्रातृभ्योगृह्णीयात् । मातुर्निवृत्ते रजसि तद्विभागविधानात् ।

तदाह विष्णुः । पितृविभक्ताविभक्तानन्तरोत्पन्नस्य विभागन्दद्युः । तथा याज्ञवल्क्यः । विभक्तेषु सुतोजातः सवर्णायां विभागभाक् । दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात् ॥ ० ॥

पित्रा सहेति । अथान्यजाविभागानन्तरमित्योत्पादि तास्ते पितृभागहरा न तु विभागात्पूर्व्वजाताः तत्र हेतुमाह । अनीश इति । स्वामिनामेव विभागार्हत्वादिति भावः । पूर्व्वोक्त विवरणमेतदिति केचित् । तथेति बृहस्पतिरेवेत्यर्थः । स्वयम र्जितमित्यनेन पुत्रान्तरेण विभक्तसंसृष्टिनापि पित्रा असा धारणशरीरायासाभ्यां यदुपार्जितन्तदपि विभक्तजस्यैव न संसृष्टिनामित्युक्तम् । यथा धने इति । विभागानन्तरलब्ध धनग्रहणवद्विभक्तपितृणपरिशोधनमपि विभक्तजैरेव कार्य्यं एवमेतादृशेन पित्रा यद्दातुम्प्रतिश्रुतं यच्चाहितं बन्धकवि धया दत्तं वा क्रीत्वा मूल्यं न दत्तं वा तत्सर्व्वं तस्यैव समाधेय मित्यर्थः । निरस्यति बृहस्पतिरेव भूम्यादिकमित्यनेन निबन्ध द्विपदयोर्ग्रहणं मणिमुक्तादेः स्वार्जिततुल्यत्वात् निवृत्तेर जमीति । तथा च तद्विभागस्य अशास्त्रीयत्वात् निवर्त्तनीयत्व मिति भावः । इत्यादेति । वाशब्दोऽवधारणार्थः तेन भुक्त व्यवच्छेदः ॥ ० ॥

पित्र्यमेव हरेद्धनमिति विरोधादुक्तयुक्तेश्च क्रमागतधनविषयमिदम् ॥

अथ विभागानन्तरागतविभागः ।

तत्र बृहस्पतिः । कृतेऽकृते विभागे वा रिक्थी

यच प्रदृश्यते। सामान्यश्चेद्भवेद्यस्तु मच भागहरस्तु सः। ऋणं क्षेत्रं गृहं लेख्यं यस्य पैतामहं भवेत्। चिरकालप्रोषितोऽपि भागभागागतस्तु सः। गोच साधारणं त्यक्त्वा योऽन्यदेशं समाश्रितः। तद्वंशस्यागतस्यांशः प्रदातव्यो न संशयः। तृतीयः पञ्चमश्चैव सप्तमो वापि यो भवेत्। जन्मनामपरिज्ञाने लभेतांशं क्रमागतम् ॥ ० ॥

उक्तयुक्तेरिति। मातुर्निवृत्ते रजसीत्युक्तयुक्तेरित्यर्थः। तथाच ज्ञातेऽज्ञाते वा गर्भे मातुरार्त्तवनिवृत्तिं विना वा कृत पितामहधनविभागस्याशास्त्रीयतया निवर्त्तकीयत्वेन तदुक्त विभागविषयत्वमेवानन्तरोक्तवचनयोरिति पूर्व्वेषां मन्वादि वचनानां पितुः स्वार्जितत्वविषयत्वमेवेति नवैपरीत्याशङ्का कर्त्तव्येति भावः॥ अथेति॥ यद्यपि विभागानन्तरागतस्या धिकारितया विभागः सिद्धएव तथापि तद्वंशपरम्परा आगतस्य सप्तमपर्य्यन्तस्य विभागज्ञापनार्थम्पृथग्वचनारम्भः स्वदेशावस्थाने चतुर्थपर्य्यन्तस्यैव विभागार्हत्वादिति बोध्यम्। कृते देशान्तरस्थितं विहाय विभागे कृते सामान्यं साधारणं विभागार्हमिति यावत्। लेख्यं शासनारूढं यादृशम्पैतामहं

पूर्व्वपुरुषसम्बन्धित्वेन पूर्व्वपुरुषवित्तस्यैव तत्कृतस्यापि चचलां
शिलागृहादिकं साधारणद्रव्यमात्रोपलक्षणम्। सप्तमोवेति।
वा शब्दः सप्तमान्तर्गतानुक्तसमुच्चयार्थकः तेन सप्तमपर्य्यन्ता
नामेव देशान्तराद्वागतानां भागिता नत्वष्टमादेरिति अत
एवासप्तमाद्दक्यविच्छित्तिर्भवतीति वचनमप्येतद्विषयमिति।
केचित्तु वाकारोऽनास्थायामनेन वीजिस्वामिमरणादिदशा
यां यदि तत्प्रपौत्रपर्य्यन्तोऽस्य पूर्व्वजस्तिष्ठेत् तदा तस्य स्वामि
त्वेन तत्परम्पराजातस्य सप्तमादूर्द्धस्याप्यधिकारः यथोत्तर
स्वत्वस्य संक्रान्तत्वात्। यदि तु वीजिस्वामिमरणादितः
प्रागेव तत्प्रपौत्रपर्य्यन्तोऽस्य पूर्व्वजो ध्वस्तस्तदा पञ्चमस्य पिण्ड
वहिर्भावेणानधिकारात्तत्पुत्रादेरपि नाधिकार इत्याहुः। तद
सत्। तथा सति देशस्थविदेशस्थयोर्व्यवस्थायां विशेषाभावेन
वचनवैयर्थ्यापातात्। अतएव मूलीभूतश्रुत्यन्तरकल्पनापि
प्रामाणिकीति सुधीभिर्भाव्यं॥०॥

यत्परम्परया मौलाः सामन्ताः स्वामिनं विदुः।
तदन्वयस्यागतस्य दातव्या गोत्रजैर्मही। तदनेन
चिरप्रोषितवंश्येन समन्ताद्वासिभिर्मौलैरात्मज्ञापन
पूर्व्वकभागग्रहणं कार्य्यम्॥ इति विभक्तागत
विभागः॥

सम्प्रत्येकपितृकाणां सवर्णानुलोमपरिणीत
स्त्रीजातानाम्पुत्राणां विभागः कथ्यते ॥ अस्ति च
सवर्णानुलोमस्त्रीपरिणयनम् ।

तथाच मनुः । सवर्णाऽग्रे द्विजातीनां प्रशस्ता
दारकर्म्मणि । कामतस्तु प्रवृत्तानामिमाः स्युः क्रम
शोऽवराः ॥ शूद्रैव भार्य्या शूद्रस्य सा च स्वा च विशः
स्मृते । ते च स्वा चैव राज्ञः स्युस्ताश्च स्वा चाग्र
जन्मनः ॥ शूद्रैवेत्येवकारः सर्व्वत्र सम्बध्यते ।
सा ते ताइत्यनन्तरपूर्व्वोक्तपरामर्षात् ४ प्रतिलोम
परिणयनं सर्व्वथा न कार्य्यमित्यर्थः । कामतस्तु
प्रवृत्तानामिति दोषाल्पत्वख्यापनार्थं । नतु दोषा
भावएव ॥ ० ॥

मौलावंशपरम्पराक्रमेण तद्देशावस्थायिनः सामन्ताः
प्रतिवासिनइत्यर्थः ॥ एकपितृकाणामिति ॥ एकपितृकाणां
विभिन्नजातिमातृकाणां पुत्राणामित्यर्थः । अनुलोमेति ।
तेन प्रतिलोमपरिणयनं सर्व्वथैव नेति सूचितम् । ननु प्रतिषेध
स्यात्प्रसङ्गापएव एतैरेव गुणैर्युक्तः सवर्णश्चापि योवरइति याज्ञ
वल्क्येन सवर्णाविवाहमात्रस्य प्रतिपादनात् असवर्णाविवा
हस्याप्रसक्तेरतआह । अस्तिचेति । प्रशस्ता गार्हस्थ्योचित

यज्ञादिधर्म्मोपयोगिनी सवर्णायाएव सत्त्वेन धर्म्मकर्म्माधिकारस्य। भर्त्तुः शरीरशुश्रूषां धर्म्मकार्य्यं च नैत्यिकं। स्वा स्वैव कुर्य्यात्सर्व्वेषां नान्यजातिः कथञ्चनेति। मनुना प्रतिपादनात्। कामतः विषयगोचरातिरागतः नतु गृहिधर्म्मलिप्सया तेनैतासां विवाहोभवत्येव। किन्तु। केवलं रागाधीनएव सइति प्रतिपन्नं। अतएव चतस्रोब्राह्मणस्य विवाहितास्तिस्रो द्वे चैका चेतरेषामिति शङ्खोऽप्याहस्म। अतएवात्राऽपिवैदिककर्म्मतया पूर्व्वं वृद्धिश्राद्धादि कर्त्तव्यमेव गोभिलेन संस्कारप्रचयमभिधाय सर्व्वाण्येवान्वाहार्य्यवन्तीत्युक्तः दोषसत्त्वं हेतुमाह। तदाहतुरिति ॥०॥

तदाहतुः शङ्खलिखितौ। भार्य्याः कार्य्याः स्वजातीयाः श्रेयस्यः सर्व्वेषां स्युरिति पूर्व्वकल्पः ततोऽनुकल्पः चतस्रोब्राह्मणस्यानुपूर्व्येण तिस्रोराजन्यस्य द्वे वैश्यस्य एका शूद्रस्य। जात्यवच्छेदेन चतुरादिसङ्ख्या सम्बध्यते। एताः परिणीताएव भार्य्या भवन्ति।

तथाह पैठीनसिः। चतस्रोब्राह्मणस्य परिणीतास्तिस्रोद्वे चैका चेतरेषां राजन्यादीनां यथाक्रमन्तिस्रोद्वे चैका चेति। आनुलोम्येऽपि द्विजातेः शूद्रायां

वक्तुदोषमाहतुर्मनुविष्णू। हीनजातिस्त्रियं मोहादुद्वहन्तोद्विजातयः। कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम्॥ शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च। शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः। शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम्॥ जनयित्वा सुतन्तस्याम्ब्राह्मण्यादेव हीयते। तदनेन क्रमोढाविषयत्वं वचनानां हारीतवचनमपि मन्वाद्येकवाक्यतया परिणीताविषयम्।

यथा। ब्रह्महा न भवत्यन्यो ब्रह्महा वृषलीपतिः। यस्तस्यामाहितो गर्भः स तेन ब्राह्मणो हतः॥०॥

अत्रानुकल्पत्वकथनेन मुख्यकल्पासम्भव एव कर्त्तव्यतया सवर्णापरिणयनसम्भवे तथाचरणस्यावैधत्वेन तदधिगमे प्रत्यवायः प्रतिपादित इति बोध्यम्। जात्यवच्छेदेनेति। तेन ब्राह्मणस्य पञ्चषट्ब्राह्मणीविवाहेन विरुद्ध इति भावः। उतथ्यतनयस्य गौतमस्य। पक्षत्रयमिदं ब्राह्मणादित्रयाणां व्यवस्थितम्बोध्यं। नन्वियं व्युत्क्रमोढाविषयिणीति प्राचीनमतनिराकरणायाह। तदनेनेति। कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः। शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते इति क्रमिकोढां शूद्रामुपक्रम्य निन्दावचनेनेत्यर्थः।

व्युत्क्रमोढाविषयत्वे च क्षत्रियादीनामपि व्युत्क्रमोढात्वे दोष श्रवणात्। हीनजातिपदवैयर्थ्यापत्तेरिति भावः। अनूढाया श्चाभिगमस्य शास्त्रीयतया निन्दायाःस्वयमनूढाविषयत्व मेव युक्तमित्यत आह। हारीतेति। तथा चास्य वचनस्य पतिशब्दस्वरसबलादूढाविषयत्वेन तदेकवाक्यतया मन्वा दिवचनमप्यूढाविषयकं विधिनिषेधौ तु श्येनवदुपपन्नाविति भावः॥ ०॥

अतएव शूद्रावर्जं द्विजातिभार्य्यामाह।

शङ्खः। ब्राह्मणी क्षत्रिया वैश्या ब्राह्मणस्य प्रकी र्त्तिता। क्षत्रिया चैव वैश्या च क्षत्रियस्य प्रकीर्त्तिता॥ वैश्यैव भार्य्या वैश्यस्य शूद्रा शूद्रस्य कीर्त्तिता। अतः स्वयमनूढायां शूद्रायामपत्यजनने नैते दोषाः। किन्तु स्वल्पदोषः प्रायश्चित्तञ्चाल्पमिति वक्ष्यते। अत्र चातुर्वर्ण्यपुत्राणां विभागमाह।

मनुः। त्र्यंशन्दायाद्धरेद्विप्रो द्वावंशौ क्षत्रियासुतः। वैश्याजोऽध्यर्द्धमेकांशमंशं शूद्रासुतो हरेत्। सर्व्वं वा रिक्थजातन्तु दशधा परिकल्प्य तत्। धर्म्यं विभागङ्कुर्वीत विधिनानेन धर्म्मवित्। चतुरोंऽशान् हरेद्विप्रस्त्रीनंशान् क्षत्रियासुतः। वैश्यापुत्रो हरेद्द्व्यं

ममंशं शूद्रासुतोहरेत्। किञ्चिद्गुणवत्त्वेन विभाग प्रकारद्वयं ॥ ० ॥

अतएवेति। यतः शूद्रापरिणयने तस्यामपत्योत्पाद नादौ च दोषोऽतएवेत्यर्थः। स्वयमनूढायामिति। अन्येनो ढायामित्यर्थः तेन तदपरिणीता शूद्रासुताभिप्रायमिति वक्ष्यमाणेन विरोधः। किञ्चिद्गुणवत्त्वेनेति शूद्रापुत्रस्य किञ्चि द्गुणवत्त्वनिर्गुणत्वाभ्यामित्यर्थः द्विजातिपुत्राणां किञ्चित् गुण वत्त्वे इति केचित्। कौनाग्नेर्गोत्रभेदानामनुद्धारस्य वेग्न च। विप्रस्योद्धारकल्पत्वा एकांशस्य प्रधानतद्व्युद्धारस्य प्राग भिहितत्वात्। पूर्व्ववचनं सोद्धारविषयमुत्तरवचनमनुद्धार विषयमिति रत्नाकरः तदसत्। क्षत्रियविशोरुद्धारानुक्तेः तयोस्तदभावादाधिक्यविधानानुपपत्तेः कौनाग्नेश्चलवाहकः ॥ ० ॥

तत्र विष्णुः ब्राह्मणस्य चतस्रषु चेत्पुत्राभवेयु रित्यादि अनेन क्रमेणांशकल्पनाऽन्यत्रापि भव तीत्यन्तम्। ब्राह्मणजातोराजन्यापुत्रएव यदि जन्म ना सर्व्वज्येष्ठोगुणवांश्च तदा ब्राह्मणेन सह तुल्य भागी कार्य्यः। ब्राह्मणेन क्षत्रियेण वा जातोवैश्य श्चेत्तद्रूपस्तदा क्षत्रियेण सह तुल्यांशी।

यथाह वृहस्पतिः। विप्रेण क्षत्रियाजातोजन्म ज्येष्ठोगुणान्वितः। भवेत्समांशः क्षत्रेण वैश्याजात स्तथैव च ॥

तथा बौधायनः। सवर्णापुत्रानन्तरापुत्रयो रनन्तरापुत्रश्चेद्गुणवान् ज्येष्ठभागं गृह्णीयात् । गुणवान् हि शेषाणां भर्त्ता भवतीति। अनेनैव हि शूद्रस्याप्येवं विधस्य वैश्येन सह समांशिता दर्शिता। या तु प्रतिग्रहेण पित्रार्जिता भूमिः सा ब्राह्मणीपुत्रस्यैव न क्षत्रियादेः। गृहं क्रमागत क्षेत्रञ्च द्विजातिपुत्राणामेव न शूद्रस्य ॥०॥

ब्राह्मणस्येत्यादि। आदितः पित्र्यमृक्थं दशधा विभजेयुः ब्राह्मणीपुत्रश्चतुरोंऽशानादद्यात्। क्षत्रियापुत्रस्त्रीन्द्वावंशौ वैश्यापुत्रः शूद्रापुत्रस्त्वेकम्। अथ चेत् शूद्रापुत्रवर्जं ब्राह्मणस्य भवेत्तदा नवधा विभजेयुः। चतुस्त्रिद्विभागीकृतानंशानादद्युः वैश्यवर्जं अष्टधा विभज्य चतुरस्त्रीनेकञ्च समादद्युः क्षत्रिय वर्जं सप्तधा कृत्वा चतुरोद्वावेकञ्च ब्राह्मणवर्जं षड्धा कृत्वा त्रीन् द्वावेकञ्च। क्षत्रियस्य क्षत्रियवैश्यशूद्रेष्वेवं विभागः अथ ब्राह्मणस्य ब्राह्मणक्षत्रियौ पुत्रौ स्यातान्तदा सप्तधा कृत्वा ब्राह्मणश्चतुरोंऽशान् गृह्णीयात् त्रीन् राजन्यः ब्राह्मणस्य ब्राह्मण

वैश्यौ चेत्तदा षड्धा विभज्य चतुरोंऽशान् ब्राह्मण आदद्यात् द्वौ वैश्यासुतः। अथ ब्राह्मणस्य ब्राह्मणशूद्रौ पुत्रौ स्यातां तदा पञ्चधा विभजेयातां चतुरोंऽशान् ब्राह्मण आदद्यादेकं शूद्रः। अथ ब्राह्मणस्य क्षत्रियवैश्यौ स्यातां तद्धनं पञ्चधा विभजेयातां त्रीनंशान् क्षत्रियस्त्वादद्यात्। द्वावंशौ वैश्यः अथ ब्राह्मणस्य क्षत्रियस्य वा क्षत्रियशूद्रसुतौ स्यातां तदा तद्धनं चतुर्द्धा विभजेयातां त्रीनंशान् क्षत्रिय आदद्यात। एकं शूद्रः। अथ ब्राह्मणस्य क्षत्रियवैश्ययोर्व्वा वैश्यशूद्रौ सुतौ स्यातां तदा तद्धनं त्रिधा विभजेयातां द्वावंशौ वैश्य आदद्यादेकं शूद्रः यदि ब्राह्मणीपुत्रौ द्वौ स्यातां शूद्रापुत्रैकः तदा ब्राह्मणीपुत्रौ अष्टभागानादद्यातामेकं शूद्रासुतः। अथ शूद्रासुतौ द्वौ स्यातामेको ब्राह्मणीपुत्रः तदा षड्धा विभज्य चतुरोंऽशान् ब्राह्मणस्त्वादद्यात द्वावंशौ शूद्रासुताविति। अनेन क्रमेणांशकल्पनान्यत्रापि भवतीति विष्णुसूत्रं। विस्तरभयादनेन न लिखितम्। अन्यत्रेति। ब्राह्मणीपुत्रैकः क्षत्रियपुत्रकौ द्वौ क्षत्रियापुत्रैकः ब्राह्मणीपुत्रौ द्वावित्यादिष्वित्यर्थः अन्यज्येष्ठो ब्राह्मणीपुत्रापेक्षया भवेदिति। ब्राह्मणपुत्रेण सह समांशो भवेदित्यर्थः। विप्रेण वैश्याजातस्तथा क्षत्रियेण जातस्तथा विधः क्षत्रियेण समांश इत्यर्थः। दृशितेति। सवर्णापुत्रानन्तरापुत्रयोरिति सामान्याभिधानादिति भावः॥ ०॥

तदाह बृहन्मनुः । ब्रह्मदायागतां भूमिं हरेयु र्ब्राह्मणीसुताः । एवं द्विजातयः सर्व्वे तथाचेत्रं क्रमागतम् ॥ क्रमादागतयोः पितामहप्रपितामहादि गृहीतयोः सकलद्विजातिसम्बन्धः । क्रमागतमित्य विशेषेणाभिधानात् । प्रतिग्रहभूमौ च क्षत्रियादि सुतानामेवाधिकारनिषेधेन तन्नप्त्रादीनामप्यननुमानम् ।

तदाह बृहस्पतिः । न प्रतिग्रहभूर्द्देया क्षत्रियादि सुताय वै । यद्यप्यस्य पिता दद्यान्मृते विप्रासुतो हरेत् । एवञ्च प्रतिग्रहभूमिरेव ब्रह्मदायागते त्युक्तम् । ब्रह्म वेदस्तदध्ययनेन तदर्थज्ञानवत्तया प्रतिग्रहविधानात् न पुनर्मन्त्रकार्च्चनलब्धा ।

यथा आवृत्तानाङ्गुरुकुलाद्विप्राणां पूजकोभवेत् । नृपाणामक्षयोह्येष विधिर्ब्राह्मोविधीयते ॥ अर्च्चन रूपत्वादस्य । अथवा । इयमेकेन निषिद्धाऽन्या परेण ॥ ० ॥

अविशेषेणेति । पैतामहमिति । विशेषमनभिधाय क्रमागतमिति प्रपितामहादिसम्बन्धिसाधारणसामान्याभिधानादिति भावः । नप्त्रादीनामिति । क्षत्रियादिपौत्राणामित्यर्थः ।

असम्बन्धिनां अधिकारेऽनुमत्यभावे सिद्ध इति शेषः । सम्बन्धिनोऽनधिकारे स्वसम्बन्धिसम्बन्धिनोऽनधिकारस्य इच्छापूपन्यायसिद्धत्वादिति भावः । एवञ्चेति । वृहस्पतिवचनैकमूलकत्वादिति भावः । उक्तं वृद्धमनुना । विधानात् विद्यायुक्तो धर्मशीलः प्रशान्त इत्यादिना दानपात्रस्य कथनादिति भावः । अर्चनमभ्यानाह । आवृत्तानामिति । गुरुकुलात् विद्यामधीत्य स्वगृहागतानामित्यर्थः । एष विधिरर्चनविधिरर्थयोऽभिधीयते इत्यन्वयः । अर्चनरूपत्वादस्येति । अर्चनं पूजा सा च गौरवितप्रीतिहेतुक्रिया तथाच तद्दानक्रियापरितोषार्थैव नादृष्टार्था । अतस्तत्स्वीकारेण प्रतिग्रहः अदृष्टार्थत्यक्तद्रव्यस्वीकारस्यैव प्रतिग्रहत्वादिति भावः । प्रतिग्रहभूमात्परत्वे ब्रह्मप्रदानर्थक्यमाशंक्याह । अथवेति । इयमर्चनरूपा एकेन मनुना अन्या प्रतिग्रहभूरन्येन वृहस्पतिना तथा च उभयरूपा भूर्ब्राह्मणीपुत्रस्यैवेत्यर्थः । ब्रह्मैव दायाधनमस्येति योगाद्ब्राह्मणसम्बन्धिभूम्यर्थत्वमाशंक्याह ॥ ० ॥

ननु ब्राह्मणस्य भूमिर्ब्रह्मदायः ४ द्विजातीनां क्रमागतक्षेत्रसम्बन्धस्य वाचनिकत्वात्केवलशूद्रस्यैव निषेधाच्च ।

यथा वृहस्पतिः॥ शूद्र्यां द्विजातिभिर्जातोन भूमेर्भागमर्हति । स्त्रजातावाप्नुयात्सर्व्वमिति धर्मो

व्यवस्थितः । भूमिमात्रोपादानात्क्रयप्रसादादिनापि द्विजातिलब्धभूमौ शूद्रस्यानधिकारः सिध्यति । यस्तु शूद्र एवैकः पुत्रोब्राह्मणस्य स तृतीय भागाधिकारी भागद्वयं सपिण्डानाम् । तदभावे सकुल्यानां । तदभावे श्राद्धकर्त्तुः ।

यथा देवलः । निषाद एकः पुत्रस्तु विप्रस्य स तृतीय भाक् । द्वौ सपिण्डः सकुल्योवा स्वधादाताथवा हरेत् ॥ ब्राह्मणेन शूद्रायां जातोनिषाद उच्यते । सपिण्डसकुल्ययोस्तु भेदोवक्ष्यते ॥ क्षत्रियवैश्ययोस्तु द्विशूद्र एवैकः पुत्रस्तदा तद्धनस्यार्द्धहरः । अपरमर्द्धं वक्ष्यमाणापुत्रधनाधिकारक्रमेण गृह्णीयुः ।

तथा विष्णुः । द्विजातीनां शूद्रस्त्वेकपुत्रोऽर्द्धहरः । अपुत्रकस्य या गतिः साऽर्द्धस्य द्वितीयस्य ॥ इदञ्च तृतीयभागाधिकारित्वमर्द्धहरत्वञ्च विद्याविनयसम्पन्नस्येति वेदितव्यम् ॥ ० ॥

कथमिति । ननु तथापि गृहक्रमागतक्षेत्रातिरिक्तभूमात्रे सुतादेरनधिकारः स्यादत आह । केवलेति । तद्दर्शयति । यथेति । द्विजाताविति शूद्रायां शूद्राज्जात इत्यर्थः । सर्व्वमिति । मनु तत्र भूमिकृतोविशेष इति भावः । तथाचैतद्वचने शूद्रा

पुत्रमात्रस्य निषेधेन प्रतिगृहीतातिरिक्तभूमौ क्षत्रियादेरधिकारसिद्धेर्न योगबलेन ब्रह्मदायागतपदस्य ब्राह्मणसम्बन्धिभूम्यर्थत्वमिति भावः। इत्यञ्चैतद्वचनैकवाक्यतया मनुवचनमपि शूद्राधिकारनिषेधार्थम्परिसङ्ख्याविधिरेव नतु द्विजातीनामधिकारविधिस्तस्य विध्यन्तरप्राप्ततया विधानासम्भवादितिबोध्यम् । वक्ष्यति अपुत्रधनाधिकारप्रकरणे इतिशेषः। तथाविष्णुरिति । अत्र द्विजातिपदं क्षत्रियवैश्योभयपरं नतु ब्राह्मणपरमपि विप्रस्य तृतीयांशाभिधायकदेवलविरोधात्। बहुवचनन्तु व्यक्तिभेदादिति भावः॥०॥

यस्मादाह मनुः यद्यपि स्यात्तु सत्पुत्रोयद्यपुत्रोपि वा भवेत् । नाधिकन्दशमाद्दद्यात् शूद्रापुत्राय धर्म्मतः॥ अनेन द्विजातिपुत्राभावेऽपि दशमांशाधिकदाननिषेधात् । पूर्व्वस्योक्तमैकशूद्रापुत्रगोचरत्वमेव ज्ञायते । यच्च ।

मनुना ब्राह्मणक्षत्रियविशां शूद्रापुत्रोन रिक्थभाक्। यदेवास्य पिता दद्यात्तदेवास्य धनं भवेत्॥ इत्यनेन रिक्थभागित्वमेव निषिद्धम् । तत् पितृप्रसादलब्धधनदशमांशत्वे सतीति विज्ञेयम्।

यथाह बृहस्पतिः ॥ अनपत्यस्य शुश्रूषुर्गुणवान् शूद्रयोनिजः । लभेताजीवनं शेषं सपिण्डाः समवाप्नुयुः ॥ वर्त्तनोचितक्षेत्राद्यर्थं किञ्चिद्दातव्यमित्यर्थः । निर्गुणस्यान्तेवासिविधिना वृत्तिमूलक्षेत्रादिकम्यादशुश्रूषया देयम् ।

यच्चाह मनुः । यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतं । स पारयन्नेव शवस्तस्मात्पारशवः स्मृतः ॥ तदपरिणीतशूद्रासुताभिप्रायम् । परिणीतायाः सकृद्रतावुपगमनस्य वैधत्वात् । तत्रैव च गर्भस्थितेर्न च द्वितीयादिसम्पर्केष्वपि ॥ ०॥

सत्पुत्रोविद्यमानद्विजातिपुत्रः अपुत्रः शूद्रातिरिक्तपुत्रशून्यः । पितृप्रसादेति । यदि पितृप्रसादलब्धस्य दशमांशतुल्यत्वन्तदा शूद्रापुत्रायान्यं न देयमित्यर्थः । विज्ञेयमिति । यद्देवास्य पिता दद्यादित्युक्तेरिति भावः । आजीवनमिति व्याचष्टे । वर्त्तनोचितेति । तत् अनन्तरोक्तवचनद्वयं । अपरिणीता केनाप्यपरिणीता किन्तु ग्राम्यधर्मार्थमवरुद्धा । अपरिणीताविषयत्वे हेतुमाह । परिणीतायाइति । तथा च परिणीताजातस्य विधिबोधितपुत्रत्वेन प्राग्रुक्त्याति भागिता युक्ता अपरिणीताजातस्य तु प्रतिषिद्धपुत्रत्वेनापकर्षान्न भागिता किन्तु

यायाच्छादनमात्राईता इति न वैपरीत्यमत इति भावः। केचित्तु। वैधत्वादिति। तथाच विधिविरोधेन निन्दायास्त दितरविषयत्वस्यैव युक्तत्वादित्याशय इत्याहुः तदसत्। सपारयत्यैव प्रवदति निन्दायाविधाविधसाधारणत्वेन सङ्कोचे हेत्वभावात्। ननु सकृदभिगमस्य वैधत्वेऽपि न पुत्रोत्पत्तेर्वै धत्वमत आह। तथैवेति। प्राथमिकाभिगमएवेत्यर्थः गर्भ स्थितेः गर्भोत्पत्तेस्तथाच निमित्तस्य सकृदभिगमस्य वैधत्वेनै मित्तिकस्य पुत्रजननरूपफलस्यापि वैधत्वन्तदर्थमेव तत्प्रति पादनात्। यथा फलचमसमस्मै भक्ष्यं प्रयच्छतीत्यत्र ऋत्विजे फलचमसदानस्य निमित्तस्य वैधतया ऋत्विजः फलचमसभ क्षणमपि वैधमिति भावः। ननु पर्व्व वर्ज्जं व्रजेद्दतावितिविधौ ऋत्वभिगमनसामान्यस्य वैधतया सकृदिति कथन्तत्राह। नचेति। उक्तार्थे प्रमाणमाह॥ ९॥

यथा याज्ञवल्क्यः। अपुत्रे भ्रातरि मृते तान्तु गच्छेदृतौ सकृत्। तथा मनुः। यथा विध्युपग म्यैनां शुक्लवस्त्रां शुचिव्रताम्। मिथोभजेदा प्रसवात् सकृत्सकृदृतावृतौ॥ प्रथमोपगमन मात्रस्य गर्भहेतुत्वे सकृद्वचनं दृष्टार्थं स्यात्। अन्य थाऽदृष्टार्थत्वमस्य कल्पनीयम्। अतएव लोकेऽपि

प्रथमसम्पर्कदिवसमादाय मङ्गलाचारार्थं नियत मासविहितपुंसवनसीमन्तोन्नयनाद्यर्थं मासगणना दृश्यते। अतः कामादुत्पादयेत्सुतमित्यनूढशूद्रा भिप्रायमेव। शूद्रस्य पुनरपरिणीतदास्यादिशूद्रा पुत्रः पितुरनुमत्या पुत्रान्तरतुल्यांशहरः।

तदाह मनुः दास्याम्वा दासदास्यां वा यः शूद्रस्य सुतोभवेत। सोनुज्ञातोहरेदंशमिति धर्मोव्यवस्थितः॥ अनुमतिमन्तरेण त्वर्द्धांशहरत्वम्।

तदाह याज्ञवल्क्यः। जातोपि दास्यां शूद्रेण कामतोंशहरोभवत्। मृते पितरि कुर्य्युस्तं भ्रात रस्त्वर्द्धभागिनम्॥ परिणीतस्त्रीजातभ्रातृशून्यस्तु सर्व्वमेव धनं गृह्णीयात्॥ यदि दौहित्रोनास्ति। तदाह याज्ञवल्क्यः। अभ्रातृकोहरेत्सर्व्वं दुहि तॄणां सुतादृते। सति तु दौहित्रे समं विभज्य गृह्णी यात्॥ विशेषाश्रवणात्। तथा ह्यपरिणीताजातत्वे ऽप्यस्य पुत्रत्वादपरस्य तु परिणीतासन्तानत्वेऽपि दौहित्रत्वात्तुल्यांशस्यैव युक्तत्वात्॥ ०॥

यथेति। दृष्टार्थमिति। पुत्रजननरूपदृष्टप्रयोजनार्थमि त्यर्थः। अन्यथा अन्यस्याभिगमनस्यापि पुत्रोत्पत्तिहेतुत्वे।

अस्य सकृद्गमनविधानस्य । तथाच पुत्रार्थमाद्यमिकाभिगमनमेव शास्त्रार्थः द्वितीयाद्यभिगमनं तु दृष्टप्रयोजनकमावार्थमिति साधूक्तं सकृदिति भावः अतएव सदैव वा पर्व्ववर्जं तासां वरमनुस्मरन्निति सदाभिगमनं वरं स्मरणनिमित्ततया निर्दिष्टं अन्यथा पुत्रमिच्छन्नित्येव निर्द्दिशेत्। प्राधान्यादिति । मङ्गलेति । अभिप्रेतार्थसिद्धिर्मङ्गलन्तदाचारार्थन्तत्प्राप्त्यर्थमित्यर्थः । तदपरिणीताशूद्रापुत्राभिप्रायमित्युक्तमुपसंहरति । अतइति दासदास्यामिति । दासस्यापरिणीतरक्षितायामित्यर्थः ॥ ० ॥

सम्प्रति पुत्रिकाकरणानन्तरमौरसपुत्रे जाते तयोर्विभागः प्रतिपाद्यते॥ तत्र पुत्रिकौरसयोस्तुल्यांशित्वम्। न पुनः पुत्रिकायाज्येष्ठत्वेन विंशोद्धारार्हता।

तदाह मनुः पुत्रिकायां कृतायान्तु यदि पुत्रोऽनुजायते। समस्तत्र विभागः स्यात् ज्येष्ठता नास्ति हि स्त्रियाः॥ स्वतोज्येष्ठपुत्रकार्य्यीकरणात् स्वपुत्रद्वारेण पुत्रिकायाः पिण्डदातृत्वात्।

तदाह मनुः । अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् । यदपत्यम्भवेत्तस्यान्तन्मम स्या

स्वधाकरम्॥ न च पुत्रिकायामेव प्रथमं पुत्रे जाते तदनन्तरमौरसपुत्रोत्पत्तौ पुत्रिकापुत्रस्य ज्येष्ठांशता भवेदिति वाच्यम्। तस्य पौत्रत्वात्।

तदाह मनुः। अकृता वा कृता वाऽपि यं विन्देत्सदृशात्सुतम्। पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम्॥ पुत्रिका हि सुतस्तस्याः पुत्रः पौत्रएव भवति। तद्वांश्च पौत्री भवति। न च ज्येष्ठत्वेन पौत्रस्यांशातिरेकः श्रुतोस्ति।

यच्च वशिष्ठवचनम्। अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम्। अस्यां योजायते पुत्रः स मे पुत्रोभवेदिति। पुत्रिकापुत्रस्यैव पुत्रत्वं वदति। तेन पुत्रिकायास्तत्पुत्रस्य च पुत्रत्वम्॥ ०॥

सममिति। समं स्यादश्रुतत्वाद्विशेषस्येति न्यायादिति भावः। ज्येष्ठता सा च पुन्नामनरकत्राणनिबन्धना तदभावाच्च श्रेष्ठत्वाभाव इत्यत आह। सुत इति। साक्षादित्यर्थः। ज्येष्ठेति। ज्येष्ठपुत्रकार्य्यम्पुन्नामनरकत्राणं तदकरणात्। तर्हि पुत्रिकाकरणं किमर्थमत आह। स्वपुत्रद्वारेणेति। स्वधाकर स्त्रिविधक्रियाकरं अन्यथा स्वधाकरशब्दस्य श्राद्धकरण मात्रार्थत्वे दौहित्रान्तरसाधारण्यात् पुत्रिकाकरणवैयर्थ्या

पत्नीः एतेन पुत्रिकापुत्रसत्त्वेऽपि पुत्रिकाया एव प्रेतकृत्याधिकार इति मतमपि निरस्तमिति वेदितव्यं। तथाच परम्परोपकारार्थमेव पुत्रिकापुत्रकरणमिति भावः। ज्येष्ठांशतेति। तस्य साक्षादेव ज्येष्ठपुत्रकार्य्यकरणादिति भावः। पौत्रत्वादिति। आतिदेशिकपौत्रत्वादित्यर्थः॥०॥

तन्न। मनुविरोधात्। पिण्डदानमात्रयोगात्पुत्रत्वमस्य गौणं। तद्द्वारेणैव पुत्रिकायाः पिण्डदातृत्वादेकस्य स्वतोऽन्यस्य तद्योगात्। पुत्रिकौरसयोस्तु सवर्णत्वे सति पूर्व्वोक्तविभागो बोद्धव्यः। असवर्णत्वेतु। तयोरसवर्णौरसपुत्रवदेव विभागः पुत्रिकौरसयोः समानत्वात्। यदि च कृतापि पुत्रिकापुत्रमनुत्पाद्यैव विधवा भूता बन्ध्यात्वेन स्थिता वाऽवधृता तदा तस्याः पितृधनेऽनधिकारः। स्वधाकरपुत्रार्थं पुत्रिकायाः कृतत्वात्। तदभावे दुहित्रन्तरतुल्यत्वादिति॥०॥

मनुविरोधादिति। न च विनिगमनाविरहः किं मनुविरोधादसिष्ठोक्तं पुत्रत्वङ्गौणङ्किम्वा वसिष्ठविरोधान्मनूक्तपौत्रत्वमेव गौणमिति वाच्यम्। मनुस्मृतेः सर्व्वस्मृतिप्रबलत्वेन

विनिगमकत्वात्। पुत्रत्वं पुत्रव्यपदेशः। गौणमिति। पिण्डदान
स्य मुख्यपुत्रगुणस्य योगात् गौणता बोध्या। पिण्डदान
योगमेवोपपादयति। तद्द्वारेणैवेति। एकस्य पुत्रिकापुत्रस्य
अन्यस्य पुत्रिकास्वरूपस्य। तद्योगात् पुत्रयोगात्। नच
परम्परया पिण्डदानापेक्षया साक्षात्पिण्डदानस्य बलवत्त्वेन
पुत्रिकापुत्रस्यैव पुत्रत्वं न्याय्यन्न तु पुत्रिकाया इतिवाच्यम्।
पुत्रिकाया अङ्गत्वात् तदधीनजन्मतया च तत्पुत्रस्य पिण्ड
दानयोगात् तस्या एवोत्कर्षेण पुत्रत्वौचित्यात्। एतदभिप्राया
देवापुत्रिकाया अपि दुहितुरभावएव दौहित्राधिकारं
वक्ष्यति। अन्यथा तत्र साक्षादुपकारकतया दौहित्रस्यैव
प्रागधिकारापत्तेः। अतएव समस्तत्रेत्यनेन पुत्रिकौरसयो
रेव समभागिता मनूक्ता नतु तस्याः पुत्रस्यौरससमभागिता
केनाप्युक्तेति। इत्थं च पुत्रिकापुत्रएव चेतिद्वादशविधपुत्रस्य
गणनायाङ्कर्मधारयोनतु तत्पुरुषइति विभावनीयम्। पूर्वोक्त
विभागइति। समभागइत्यर्थः। असवर्णत्वे औरसस्या
सवर्णत्वे। औरसशब्दोऽत्र परिणीतायां स्वयमुत्पादितपरः।
नतु सवर्णायां संस्कृतायां स्वयमुत्पादयेत्तु यम्। औरसन्तं
विजानीयात्पुत्रं प्रथमकल्पितमित्युक्तौरसपरम्। तस्य तु
असवर्णत्वासम्भवात्। असवर्णौरसपुत्रवदिति। असवर्णौरसेन
सहासवर्णौरसस्य क्षत्रियादेर्यादृशस्त्रिकांशरूपोभागस्ता

इत्यर्थः। दुहितृपुत्त्रस्तु मातामहादिति। एतावता यथा बन्ध्यायामपुत्त्रिकायामनन्तराधिकारिणी दौहित्रस्तथा पुत्त्रिकायामपीति प्रतिपादितम्॥ ० ॥

औरसेन तु क्षेत्रजादीनां विभागे ये पितुः सवर्णा औरसपुत्त्राद्योत्तमवर्णाः पुत्त्रिकापुत्त्रक्षेत्रजकानीनगूढजाऽपविद्धसहोढपौनर्भवदत्तकस्वयमुपागतकृतकक्रीताः पुत्त्रास्ते औरसपुत्त्रभागस्य तृतीयांशभागिनः तदाह। द्वादशपुत्त्रानभिधाय।

देवलः। एते द्वादश पुत्त्रास्तु सन्तत्यर्थमुदाहृताः। आत्मजाः परजाश्चैव लब्धा याहच्छिकास्तथा॥ तेषां षड्बन्धुदायादाः पूर्व्वेऽन्ये पितुरेव षट्। विशेषश्चापि पुत्त्राणामानुपूर्व्व्या विशिष्यते॥ सर्व्वे ह्यनौरसस्यैते पुत्त्रा दायहराः स्मृताः। औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्यं न विद्यते॥ तेषां सवर्णा ये पुत्त्रास्ते तृतीयांशभागिनः। हीनास्तमुपजीवेयुर्ग्रासाच्छादनसम्भृताः॥ औरसादयः षट् न केवलं पितृदायहराः ४ किन्तु बन्धूनामपि सपिण्डादीनान्दायहराः। अन्ये परभृताः ४ पितुरेव परं दायहराः न सपिण्डादीनाम्। औरसपुत्त्रभृत्यस्य पितुरेव

सर्व्वहराः औरसे सति तु ये पितृसवर्णास्ते तृतीयांशहराः । पुत्रिकाया अपि औरसतुल्यत्वादयमेव भागक्रमः । येतु पितुर्हीनवर्णा औरसपुत्राच्चोत्तमवर्णास्ते औरसस्य पञ्चमं षष्ठं वांशं गुणवद् गुणतया गृह्णीयुः ॥ ० ॥

द्वादशपुत्रानिति । पुत्रिकया सहेत्यर्थः । आत्मजाः औरसपौनर्भवपारशवपुत्रिकाः । परजाः क्षेत्रजादयः । लब्धाः दत्तक्रीतसहोढकानीनकृत्रिमाः । यादृच्छिकाः स्वयमुपस्थिताः अपविद्धस्वयमुपागतगूढोत्पन्नाः । ये पितृसवर्णा इति । ब्राह्मणस्य ब्राह्मण्यां जातः क्षेत्रजः औरसवैश्यापुत्रापेक्षया उत्तमवर्णः पितुः सवर्ण इत्येवमादयइत्यर्थः । अयमेवेति । औरसेन सह तेषां योविभागक्रमः तृतीयांशक्रमः स एव पुत्रिकयापि सहेत्यर्थः । एतदर्थमेव स्वयं कृतद्वादशविध पुत्रगणनायां पुत्रिकायाः प्रथममुद्देश इति बोध्यम् । गुणवद् गुणतयेति । सगुणत्वनिर्गुणत्वाभ्यामित्यर्थइति सम्प्रदायः वस्तुतः । पितुर्हीनवर्णस्य औरससवर्णत्वे षष्ठांशिता । तस्मादुत्तमवर्णत्वे पञ्चमांशिता युक्ता । पितुर्हीनवर्णस्य औरसस वर्णस्य विभागानुक्तेरनध्यवसायापत्तेरिति बोध्यम् । गुणवद् गुणापेक्षयेति पाठे अगुणोनिर्गुणः तेन गुणवन्निर्गुणरूपविषय भेदादित्यर्थः ॥ ० ॥

यथा मनुः षष्ठन्तु क्षेत्रजस्यांशम्प्रदद्यात्पैतृकाद्धनात्। औरसोविभजन्दायम्पित्र्यं पञ्चममेव वा। देवलवचने सर्व्वेषां क्षेत्रजतुल्यत्वात् मनुवचने च क्षेत्रजपदमुपलक्षणम्। येतु पितुरौरसाच्च भ्रातुर्हीनवर्णास्ते ग्रासाच्छादनमात्राधिकारिणः।

तदाह मनुः एकएवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः। शेषाणामानृशंस्यार्थम्प्रदद्यात्तु प्रजीवनम्।

तथा कात्यायनः उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः स्मृताः। सवर्णास्त्वसवर्णास्तु ग्रासाच्छादनभागिनः। मनुवचने शेषपदं कात्यायनवचने चासवर्णपदं हीनवर्णपरम् देवलनैकवाक्यत्वात्। अनियोगोत्पन्नक्षेत्रजस्यौरसेन सह विभागमाह मनुः यद्येकरिक्थिनौ स्यातामौरसक्षेत्रजौ सुतौ। यद्यस्य पैतृकं रिक्थं स तद्गृह्णीत नेतरः॥ यस्य वीजाद्योजातः स तस्य धनं गृह्णीयात्। इतरोऽन्यवीजजोन गृह्णीयादित्यर्थः।

अतएव नारदः द्वौ सुतौ विवदेयातां द्वाभ्यां जातौ स्त्रियाधने। तयोर्य्यद्यस्य पित्र्यं स्यात्तत्सगृह्णीत

मेतरः । यत्पितृदत्तं यद्धनं स्त्रियास्तत्पुत्रस्तद्बीज अस्तद्धनं गृह्णीयान्नान्यइत्यस्तु किं विस्तरेण ॥०॥

तुच्छत्वादिति । तुच्छांशित्वप्रतिपादनादित्यर्थः । आनृशंस्य अनुकम्पा तदर्थन्तन्निमित्तकमित्यर्थः । तेन जीवनदानेऽपि इच्छामात्रप्रयोजकं न तु तेषामधिकारइति भावः । जीवनं भरणम् । हीनवर्णपरमिति । नतूत्तमवर्णपरमपि । दैवत्वेनेति । तेनोत्तमवर्णस्य भागितायाहीनवर्णस्य ग्रासाच्छादन मात्रस्य चोक्तत्वादिति भावः । अनियोगोत्पन्नेति । औरसं मुत्पाद्य क्षेत्रिणि मृते तस्मिन्क्षेत्रे क्षेत्रजेऽन्येन शुल्कं दत्वा यउत्पादितस्तदौरसेन सहेत्यर्थः । शुल्कादाने तु स क्षेत्रिणएव पुत्रोन वीजिनः । तेन तस्य न वीजिधनाधिकारिता । किन्तु क्षेत्रिणएव धने औरससहतीर्यांशहारितेति । अशुल्कोपहृता यान्तु पिण्डदावोढुरेव ते इत्युक्तेरितिबोध्यम् ॥०॥

अथापुत्रस्य मृतस्य धने परस्परविरुद्धवचन दर्शनेन व्याख्यातारोविवदन्ते ।

तथा बृहस्पतिः । आम्नाये स्मृतितन्त्रेच लोकाचारे च सूरिभिः । शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समा ॥ यस्य नोपरता भार्य्या देहार्द्ध

नस्य जीवति। जीवत्यर्द्धशरीरेऽर्थे कथमन्यः समाप्नुयात्॥ सकुल्यैर्विद्यमानैस्तु पितृमातृसनाभिभिः। अपुत्रस्य प्रमीतस्य पत्नी तद्भागहारिणी॥ पूर्व्वं प्रणीताग्निहोत्रं मृते भर्त्तरि तद्धनम्। विन्देत्पतिव्रता साध्वी धर्म्मएष सनातनः। जङ्गमं स्थावरं हेम कुप्यं धान्यं रसाम्बरम्। आदाय दापयेच्छ्राद्धं मासषाण्मासिकादिकम्। पितृव्यगुरुदौहित्रान्भर्तुः स्वस्रीयमातुलान्। पूजयेत्कव्यपूर्त्ताभ्यां वृद्धानाथातिथीन्स्त्रियः। तत्सपिण्डाबान्धवावा ये तस्याः परिपन्थिनः। हिंस्युर्धनानि तान्राजा चौरदण्डेन शासयेत्॥ ०॥

अथापुत्रधनाधिकारिणः॥ अथेति॥ पुत्राधिकारनिरूपणानन्तरमित्यर्थः। धने धनाधिकारविषये। विवदन्त इति। पत्न्याभ्रात्रादेः पूर्व्वमधिकारः भ्रातुः पत्नीतः पूर्व्वमधिकार इति विरुद्धं भाषन्त इत्यर्थः। विरुद्धवचनान्याह। तथेत्यादि आम्नायते अभ्यस्यत इत्याम्नायोवेदः। पुण्येति। एकैकस्मिन्नेव पुण्यापुण्यकर्म्मणी विहितनिषिद्धकर्म्मणी तयोः फले स्वर्गनरकरूपे भोक्तृत्वेन समेत्यर्थः। ईदृश शरीरार्द्धमित्युक्ताभेदहेतुः स्वकर्म्मफलभोगस्य स्वामनतिरिक्तस्वैवोत्सर्गिकत्वात्

देहार्द्धमिति। देहार्द्धेन प्रत्यक्षतया स जीवतीत्यर्थः। सकुल्यः सनाभिभिरिति तृतीयाद्वयं सप्तम्यर्थे। तेन सकुल्यादिषु सत्स्वित्यर्थः। सनाभयः सहोदराः। प्रमीतस्य मृतस्य। पतिव्रती पतिशुश्रूषाव्रता। ननु मृते वियेत या नारीसाध्वी ज्ञेया पतिव्रतेत्युक्तपतिव्रता। मरणेनैकैतन्निष्पत्तेरत्रासम्भवात्। साध्वी अव्यभिचारिणी तेन तद्विपरीतानामधिकारनिवृत्तिः। सनातनोऽनादिपरम्परागतः। कुप्यं सुवर्णरूप्याभ्यामन्यत्तैजसं लौहादि। अम्बरं वस्त्रम्। आदाय स्वीकृत्य। दापयेदिति स्वार्थेणिच्। मासषाण्मासिकेत्यनेन पार्व्वणनिषेधः। आदिमा आद्यादिप्रेतश्राद्धान्तरपरिग्रहः। पितृव्येति। द्वितीयान्तद्वयं भर्त्तुरित्यत्रान्वेति। कथं मृतोद्देशेन त्यक्तमूर्त्तमन्नपानादि ॥ ७ ॥

तदेतैः सप्तभिर्वचनैरपुत्रस्य मृतस्य यद्यावद्धनं स्थावरजङ्गमहेमादिकं भर्त्तुस्तत्सर्व्वं सोदरभ्रातृपितृव्यदौहित्रादिषु सत्स्वपि पत्न्याएवेति। येतु तद्धनग्रहणे प्रतिपक्षाः स्वयमेव वागृह्णन्ति ते चौरवद्दण्डनीयाइति ब्रुवाणोवृहस्पतिः पत्नीसद्भावे पितृभ्रातृप्रभृतीनां धनाधिकारं सुदूरं निरस्यति।

तथा याज्ञवल्क्यः [redacted] पत्नीदुहितरश्चैव पितरौ भ्रातरस्तथा। तत्सुतोगोत्रजोबन्धुः शिष्यः सब्रह्म

चारिणः ॥ इयामभावे पूर्व्वस्य धनभाग्पुत्तरोत्तरः। स्वर्य्यातस्य ह्यपुत्रस्य सर्व्ववर्णेष्वयं विधिः ॥ अनेन पूर्व्वपूर्व्वस्याभावे परपरस्याधिकारं वदन् सर्व्वेभ्यः पूर्व्वं पत्न्याएव धनाधिकारमभिधत्ते।

तथा विष्णुः ॥ अपुत्रस्य धनम्पत्न्यभिगामि ४ तदभावे दुहितृगामि ४ तदभावे पितृगामि ४ तदभावे मातृगामि ४ तदभावे भ्रातृगामि ४ तदभावे भ्रातृपुत्रगामि ४ तदभावे सकुल्यगामि ४ तदभावे बन्धुगामि ४ तदभावे शिष्यगामि ४ तदभावे सहाध्यायिगामि तदभावे ब्राह्मणधनवर्ज्जं राजगामि ॥ अनेनापि क्रमेण प्रथमम्पत्न्याएव धनाधिकारोनिरूपितः। नच वर्त्तनोपयुक्तधनमात्राधिकारार्थम्पत्नीवचनमितिवाच्यम्। सकृच्छ्रुतस्य धनपदस्य पत्न्यपेक्षमकृत्स्नपरत्वं कृत्स्नपरत्वञ्च भ्रात्राद्यपेक्षमिति तात्पर्य्यभेदस्यान्याय्यत्वात्। अतः कृत्स्नधनगोचरएव पत्न्या अधिकारोवाच्यः।

तथा वृद्धमनुः ॥ अपुत्रा शयनम्भर्त्तुः पालयन्ती व्रते स्थिता। पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत च ॥ ० ॥

सप्तवचनैरिति । सप्तानामेव वचनानां पत्न्यधिकारतात्पर्यकत्वादिति भावः । सब्रह्मचारिणः एकदैकगुरोरध्ययनेन वेदाभ्यासेन समानव्रतचारिणः । पूर्व्वस्येति वीप्सितं स्वर्यातस्य मृतस्योपलक्षणमेतत्पतितादेरपि बोध्यम् । संस्कृतस्येति । एकस्य (अन्यस्य) पत्न्यन्वये वर्त्तनोचितधनबोधकत्वं भ्रात्राद्यन्वये च कृत्स्नधनबोधकत्वमसम्भवतीत्यर्थः । भर्त्तुः शयनम्पालयन्ती तदीयशयने पुरुषान्तरं वारयन्ती × अव्यभिचारिणीति यावत् । व्रते पारलौकिकभर्त्रुपकारे स्थिता तदुक्ता । व्रते एकादश्यादिव्रते स्थिता तत्कारिणीत्यर्थ इति केचित् । तदसत् । भर्तृमरणपक्षे तदसम्भवात् । तत्पिण्डं भर्तृपिण्डं ॥०॥

तत्पिण्डमित्यतस्तदित्यनुषज्यते । तच्छब्देन भर्त्तुः परामर्षाद्भर्त्तुः कृत्स्नमंशम्पत्नी लभेत × नतु स्वांशकृत्स्नमित्यर्थः । कृत्स्नस्वांशोद्देशेन लभेतेति विधानानुपपत्तेः स्वामिभावज्ञापनार्थत्वादस्य वचनस्य । नच स्वांशे स्वामिभावज्ञापनमर्हति × स्वांशज्ञापनेनैव ज्ञातत्वात् । नच ग्रहणविधानार्थं तदिति वाच्यम् × स्वधनग्रहणस्य रागादेव प्राप्तत्वात् । नच नियमार्थवचनमिति वाच्यम् × अदृष्टार्थत्वापत्तेः ॥०॥

अनुषज्यत इति । यद्यपि समासस्थविशेषणमात्रस्यानु
षङ्गोऽव्युत्पत्तिविरुद्धः । अन्यथा चैत्रपटमपनय घटमानयेत्या
दौ चैत्रस्यानुषङ्गेन घटान्वयापत्तेः । तथापि तदिति षष्ठ्यन्त
मव्ययमित्यभिप्रायः । आकांक्षायत्ते समासस्थस्याप्यन्वये बाध
काभावः । भर्त्तुरित्यस्यानुषङ्गस्तु व्यवहितत्वाद्सम्भवतीति
चूडामणिः । वस्तुतस्तदित्यर्थपरं इत्यत इत्यनन्तरं उपस्थित
मिति शेषः । तथाच । तद्गृहस्वरूपमनुषज्यते अंशशब्दस्य
सम्बन्धिकतया व्युत्पत्तिबलेनोपस्थितत्वात्सम्बन्धितया अन्वी
यत इत्यर्थः । ननु तद्वाक्यघटकपदोपस्थितायाः पत्न्या एवान्व
योयुक्तः । न तु भिन्नवाक्योपस्थितस्य भर्त्तुस्तथाच पत्नी स्वांशं
कृत्स्नं वर्त्तनोचितं लभत इत्येवार्थः किं न स्यादत आह ।
नन्विति । अनुपपत्तौ हेतुमाह । स्वामिभावेति । स्वत्वस्याप
नार्थत्वादित्यर्थः । अस्य वचनस्य । नच नहि स्वांशे स्वत्वेन
ज्ञाते ज्ञातत्वादिति तथाच प्राप्तत्वाद्विधित्वासम्भवो वैयर्थ्यं
निराकाङ्क्षत्वं चेतिभावः । नच ग्रहणेति । तथाच ग्रहणविधि
रयं नस्वत्वविधिरिति भावः । ग्रहणं यथेष्टविनियोगलक्षणम् ।
रागादेवेति । तथापि विधित्वासम्भवस्तदवस्थ एवेति भावः ।
नियमार्थमिति । स्वांशं गृह्णीयादेवेति नियमार्थमित्यर्थः ।
अदृष्टेति । विधिनियमितस्य नित्यतया तस्मात् पक्षमित्या
पूर्व्वे कल्पनीयमन्यच दृष्टार्थत्वे सम्भवति गौरवादन्याय्यमिति
भावः । गौरवान्तरमप्याह ॥ ० ॥

नियमे च नियोज्यादिकल्पनमपि स्यात्। यच्चोक्तम्। नन्वनन्त्यादिः पुत्रोंशं कृत्स्नं लभेत इत्युक्ते पित्र्यं कृत्स्नमंशमिति किन्तर्हि कृत्स्नं स्वांशमिति। तथाचापि कृत्स्नं स्वांशापेक्षमिति। तन्न। अनन्त्यादिः पुत्रोंशं कृत्स्नं लभेतेति वचनाभावात् दृष्टान्तानुपपत्तेः। भवतु वा। तथापि पूर्व्वोक्त हेतुना स्वांशं लभेतेति विध्यनुपपत्तेः। पित्रंशापेक्षमेव वर्णनं युक्तम् अतएव सर्व्वत्रान्यधनएव अन्यसम्बन्धज्ञापनं मुनयः कुर्व्वन्ति। यथा पितृधने पुत्राणां अपुत्रधने पत्न्यादीनामित्यादि न पुनः स्वांशग्रहणे प्रेरयन्ति। यच्च सम्बन्धिशब्दत्वेन स्वसम्बन्ध्युपस्थापकत्वम्॥ ०॥

नियमे चेति। नियोज्येति। ममेदं कार्य्यमिति बोद्धा नियोज्यः। गुरुमते स्वर्गकामोयजेतेत्यादौ स्वर्गकामनियोज्यकयागविषयकं कार्य्यमिति बोधस्य सिद्धत्वेन प्रकृतेऽपि बोधस्य नित्यत्वेन प्रत्यवायपरीहारफलकामरूपनियोज्यकल्पनं। आदिपदादकरणे प्रत्यवायकल्पनमपिस्यादित्यर्थः। नियोज्यकल्पनायाउभययाप्यावश्यकत्वेऽपि कामनारूपाधिकाराधिक्यमत्रेति बोध्यम्। अनन्त्यादिरनन्त्यादिभिन्नः।

कृत्स्नमंशमिति । अवगम्यत इति शेषः । कृत्स्नं स्वांशापेक्ष
मिति । वचनार्थवर्णनमिति शेषः ननु अनन्यादिरितियथा
वचनमिति कृत्वा दृष्टान्ततया नोक्तम् । किन्तु । साहश्यार्थ
व्युत्पत्तिकल्पनास्थानतया तत्र वैदिकस्येव लौकिकस्यापि
वाक्यस्याविशिष्टत्वाच्च तत्र वचनाभावोऽकिञ्चित्कर इत्यत
आह भवतु वेति । अभ्युपगमादाह भवतुवेतीति केचित् ।
पूर्व्वोक्तहेतुना स्वांशं लभेतेति विधानानुपपत्तिरूपेण पित्र्यं
शापेक्ष्यमिति । अनन्यादिरित्युक्तवाक्येपीति शेषः । तत्र पुत्रा
न्तरस्याप्यंशादेकवचनमनुपपन्नमिति वाच्यम् । तस्योद्देश्य
विशेषणतया अविवक्षितत्वादेकपुत्रस्थलाभिप्रायेण वा तत्
अतएव स्वधने स्वत्वविधानासम्भवादेव । सम्बन्धिशब्दत्वेनेति।
सम्बन्धिशब्दस्येत्यादिः । सम्बन्ध्युपस्थापकत्वं स्वार्थस्य यः
सम्बन्धो प्रतियोगिनिरूपकरूपस्तद्घटितस्वार्थबोधकत्वं । तं
विहाय स्वार्थान्वयबोधत्वासम्भवात् । तद्घटितमूर्त्तिकत्वात् ।
पुत्रत्वादिरूपसम्बन्धिताघटकता पुनरुपस्थितस्यैव सम्ब
न्धिन इतिभावः । उक्तव्युत्पत्तिकल्पनस्थलं दृष्टान्तविधया
दर्शयति ॥०॥

यथा । मातेति न परमातावगम्यते इत्युक्तत्वा
दप्ययुक्तम् । अनुपात्तसम्बन्धिविषयत्वात्तस्य

नहि डित्थस्य मातरमानयेत्युक्ते प्रयोज्यस्य माता प्रतीयते प्रयोजकस्य वा तद्वदत्रापि तत्पिण्डमिति तत्पदोपात्तत्वात्सम्बन्धिनः कथमप्यपेक्षिता। विधानानुपपत्तिश्च पूर्व्वमुक्तैव । तस्मात्कृत्स्नतदंशग्रहणमेव पत्न्याग्रहणमनुबोधयति। तथा। पत्न्यधिकारविपरीतबोधकानि वचनानि।

यथा शङ्खलिखितपैठीनसियमाः । अपुत्रस्य स्वर्य्यातस्य भ्रातृगामि द्रव्यन्तदभावे पितरौ हरेतां पत्नी वा ज्येष्ठा सगोत्रशिष्यसब्रह्मचारिणः । अत्र भ्रातुरभावे पित्रोस्तयोरभावे पत्न्यधिकार इति विरोधः।

तथा देवलः। ततो दायमपुत्रस्य विभजेयुः सहोदराः। तुल्यादुहितरोवापि ध्रियमाणः पिता पिवा॥ सवर्णाभ्रातरोमाता भार्य्या चेति यथाक्रमम्। एषामभावे गृह्णीयुः कुल्यानां सहवासिनः॥०॥

यथेति। यथा मातेत्युक्ते उपस्थितस्य वक्तुरेव सम्बन्धितया ऽन्वयित्वं तथा प्रकृतेऽपि अंशशब्दस्य सम्बन्धिकतया उपस्थितायाः पत्न्या एव तदर्थान्वयित्वमिति तत्कथमर्त्तुःकृत्स्नमंशमिति भर्त्त्रन्वयं व्याख्यामीति पूर्व्वपक्षः यद्यपि पत्नीपदस्य

सम्बन्धिकतया तदर्थान्वयित्वेन भर्त्राद्युपस्थितएव तदा तथापि विशेषणतया विशेष्यतया च नानासम्बन्ध्युपस्थिति स्तत्र विशेष्यतयोपस्थितस्यैवान्वयित्वंनतु विशेषणतयोपस्थित स्येति व्युत्पत्तिः कथमन्यथा यज्ञदत्तमित्रं पितृगृहमविशत् इत्यादौ न यज्ञदत्तस्य पित्रन्वयोऽपितु मित्रस्येति नियम उपपद्यत इति भावः । दूषयति । तदपीति । अनुपात्तेति । सम्बन्धिपदार्थान्वययोग्यतया सम्बन्धिनः शब्दोपात्तत्वे तस्यैव तदन्वयित्वं न सम्बन्ध्यन्तरस्योपस्थितेन पत्न्यंशान्वयः तस्याः प्रथमान्तोपस्थितत्वेन षष्ठ्यन्ताकाङ्क्षेण सम्बन्धिनान्वया योग्यत्वादिति भावः । प्रयोज्यस्येति । प्रयोजकस्येति च इयम माणान्तरेण तद्द्वयस्योपस्थितौ बोध्यम् । प्रकृते भर्तृरूपसम्ब न्धिनः शब्दोपात्तत्वमतिपादयति । तत्पिण्डमिति । पत्न्य पेक्षिता पत्नीरूपसम्बन्धिघटितस्वार्थबोधकता अंशशब्दस्येति शेषः पत्न्यन्वये बाधकमप्याह । विधानानुपपत्तिश्चेति । उप संहरति । तस्मादिति । तदंशपणं भर्त्रंशग्रहणं । तुल्याः सवर्णाः । म्रियमाणः निर्दोषः सन् जीवदवस्थः । सवर्णा भ्रातरो वैमात्रेयाः सोदराणामागुरुत्वात् । कुल्यानां सह वासिनः सकुल्याः ॥ ० ॥

अत्र सर्व्वादौ भ्रातुरधिकारः । सर्व्वशेषे च भार्य्याया इति विरोधः । अत्र केचिदविभक्तसंसृष्ट

गोचरोभ्रात्रधिकारः प्रथमं विभक्तासंसृष्टगोचरस्य पत्न्यधिकारइति समादधति। तद्बृहस्पतिविरुद्धम्।

यदाह । विभक्ताभ्रातरोये च सम्प्रीत्यैकत्र संस्थिताः। पुनर्विभागकरणे तेषां ज्यैष्ठ्यं न विद्यते॥ यदा कश्चित्प्रमीयेत प्रव्रजेद्वाकथञ्चन। नलुप्यते तस्य भागः सोदरस्य विधीयते॥ यातस्य भगिनी सा तु ततोंऽशं लब्धुमर्हति। अनपत्यस्य धर्मोऽयम भार्य्यापितृकस्य च॥ संसृष्टानान्तु यः कश्चिद्विद्या शौर्य्यादिना धनम्। प्राप्नोति तस्य दातव्योऽह्यंशः शेषाः समांशिनः॥ अत्रोपक्रमोपसंहारयोः संसृष्टत्वकीर्त्तनात् । तन्मध्यपठितम् । नलुप्यते तस्य भागः सोदरस्य विधीयते । इतिवचनं संसृष्टविषयं वाच्यम्। अत्र चानपत्यस्य धर्मोऽय मभार्य्यापितृकस्य चेति। पुत्रदुहितृपत्नीपितृणाम भावे संसृष्टस्य सोदरस्य भ्रातुरधिकारम्बोधय तीति। कथन्तस्य पत्नीवाधकत्वम्। किञ्च न लुप्यत इति अविभक्तत्वे संसृष्टत्वेच भ्रात्रन्तरीयद्रव्य मिश्रीभूतस्य द्रव्यस्य पृथक्प्रतीतौ लोपाशङ्कायां न लुप्यतइति वचनमुपपद्यते। विभक्तस्यासंसृष्टस्य

तु धने विभक्तत्वप्रतीतौ का लोपाशङ्का। तस्मात्संसृष्टविषयत्वमेवामीषां वचनानाम् ॥ ० ॥

प्रश्नभेदाश्च मातरश्च विशेषेदित्यर्थः । भगिनी अनूढा । अंशं विवाहोचितं । विधवापि वर्त्तनोचितमिति केचित् । इदमप्यसंसृष्टविषयं कुतोऽस्मादतआह उपक्रमोपसंहारयोरिति । ननूक्तविरोधपरीहाराऽन्यथानुपपत्त्या ग्रन्थंश्रपतितन्यायेनादरणीयइति विभक्तविषत्वमेकवाक्यमित्यतआह । किञ्चेति । लोपाशङ्कायामिति । लोपोऽविभाज्यत्वम् । अमीषां वृहस्पतिवचनानाम् । निरुक्तविषयविभागे हेतुमपि विकल्प्य दूषयति ॥ ० ॥

किञ्च । पत्न्यादेः पूर्व्वं भ्रात्रधिकारव्यापकशङ्खादिवचनानां संसृष्टभ्रातृविषयत्वं वचनाद्वान्यायाद्वा तत्र न तावद्वचनात् विशेषवचनाभावात्संसृष्टिनस्तु संसृष्टीत्यादिवचनानान्तु भ्रात्रधिकारावसरे विशेषज्ञापनपरत्वेन भ्रात्रधिकारमात्रपरत्वानुपपत्तेः । अनन्तरोपन्यस्तवृहस्पतिवचनानां च संसृष्टविषयत्वे पुत्रदुहितृपत्नीपितृपर्य्यन्ताभावे सोदरभ्रात्रधिकारज्ञापनात्तद्विरुद्धत्वादसंसृष्टवि

षयत्वमेव तावद्युक्तम्। न तु संसृष्टविषयत्वम्। अथ न्यायवदिदमभिधीयते। तथाहि। संसृष्टत्वे यदेकस्य भ्रातुर्धनन्तदपरस्यापि। तच्चैकस्य मरणेन स्वत्वनाशेऽपि जीवतस्तत्र स्वामित्वानपायात्तस्यैव तद्भवति। न तु पत्न्याः। भर्तृमरणेन पत्नीस्वत्वस्यापि नाशात्। यथा सत्सु पुत्रादिषु न तद्धनस्य पत्न्याइति तन्मन्दम्। नहि संसृष्टत्वेऽपि यदेवैकस्य तदेवापरस्यापि ॥०॥

किञ्चेति। विशेषज्ञापनपरत्वेन समानसम्बन्धिनां मध्ये संसर्गिणः संसर्गनिबन्धनाधिकारबोधकत्वेन। अन्यथा पुत्रसत्त्वेऽपि संसृष्टभ्रात्रधिकारप्रसङ्गादिति भावः प्रत्युत विरुद्धमेव वचनमस्तीत्याह। अनन्तरेति। पुत्रदुहित्रित्यादि। अनपत्यस्य धर्मायमभार्य्यपितृकस्य चेत्यभिधानादिति भावः। असंसृष्टविषयत्वमेवेति। शङ्खादिवचनानामिति पूर्व्वोक्तमनुषज्यते। युक्तमिति। संसृष्टत्वे पत्न्यभावे भ्रात्रधिकारादर्थादसंसृष्टत्वे पत्नीसत्त्वे भ्रात्रधिकारस्य स्वरससिद्धत्वादिति भावः। न्यायमेवाह। तथा हीति। तदपरस्यापीति। सर्व्वेषां संसृष्टानां सर्व्वधनएव सामान्यस्वत्वं न प्रादेशिकमिति भावः। ननु दम्पत्योर्मध्यगन्धनमित्यनेन तत्र पत्न्या अपि स्वत्वस्य विद्यमानतया अनन्तरमन्याएव युगपदुभ

धोर्म्मो तद्धनं कथं न स्यादत आह । नन्विति । भर्त्तृमरणेन तत्स्वत्वापगमेन भर्त्तृमरणात् तत्पत्नीस्वत्वनाशे प्रमाणमाह । यथेति । इत्थं च पत्न्यधिकारस्थलेऽपि भर्त्तृमरणात्तस्याः प्राचीनं स्वत्वं नश्यत्येव सामग्रीसत्त्वात् । किन्तु पुनःस्वत्वान्तरमुत्पद्यते अतएव तद्धनस्य दायत्वमपीति भावः ॥ ० ॥

किन्तु । अविज्ञातैकदेशविषयम् । तद्द्वयोर्न तु समग्रमेव समग्रस्वत्वकल्पनायाम्प्रमाणाभावात् इत्युक्तमादावेव । परिणयनोत्पन्नं भर्त्तृधने पत्न्याः स्वामित्वम् भर्त्तृमरणान्नश्यतीत्यत्र च प्रमाणाभावात् । सति तु पुत्रे तदधिकारशास्त्रादेव पत्नीस्वत्वनाशोऽवगम्यते । अत्रापि संसृष्टभ्रात्रधिकारशास्त्रात्तद्विनाशोऽवगम्यते । इति चेन्न । संसृष्टभ्रातृगोचरत्वस्याद्याप्यसिद्धेः । सिद्धे हि भ्रातृसंसृष्टभर्त्तृमरणेन पत्नीस्वामित्वनाशे भ्रात्रधिकारशास्त्रस्य संसृष्टविषयत्वं सति तु तद्विषयत्वे शास्त्रस्य पत्नीस्वामित्वनाश इतीतरेतराश्रयम् ॥ ० ॥

किन्त्विति । अविज्ञातश्चैकचौयत्वादिना विशेषरूपेण धर्म्मिण्यनिश्चितम् । एकदेशमिति मध्यपदलोपिसमासाश्रयणेन

एकदेशोद्देशव्याश्रयोयस्य तादृशधनादित्यर्थः। नत्विति। न तु समयमेव द्वयोरित्यन्वयः न तु समुदितमेवोभयस्वामिकमित्यर्थः। प्रमाणाभावादिति। वैशेषिकव्यवहारानर्हत्वेन प्रमाणाभावादित्यर्थः परिणयोत्पन्नत्वदधीनदम्पत्यसंस्कारोत्पन्नम्। अन्यथा परिणयनानन्तरभाविभर्तृधने स्वामित्वानुपपत्तेः परिणयनस्य विनष्टत्वादिति। प्रमाणाभावादिति। तथाच। पत्न्याः स्वत्वस्य विरोधिनः सत्वान्न भ्रातृस्वत्वसम्भव इति भावः। तदधिकारशास्त्रस्येति। तथाच। भर्तृमरणात्स्वत्वनाशे पुत्रसत्वकालः सहकारी कल्प्यत इति भावः। असिद्धेरिति। तथाच संसृष्टभ्रात्रधिकारबोधकशास्त्रमेतद्वचनन्न भवतीत्यर्थः। ननु भर्तृमरणात्पत्न्याः स्वत्वनाशात् भ्रातुः स्वत्वोत्पत्तौ बाधकाभाव इत्यत आह। सिद्धेहीति। संसृष्टविषयत्वं संसृष्टधनभ्रातृविषयत्वं मंस्यतीति शेषः। नतिनु सिद्धेतु। पत्नीस्वत्वनाश इति शास्त्रबलेनैव पुत्रसत्ताकालस्यैव संसृष्टभ्रातृसत्वकालस्यापि सहकारित्वकल्पनाभावः। ननु दम्पत्योर्मध्यगन्धनमित्यनेन यत्र पत्युः स्वत्वन्तत्रैव पत्न्याः स्वत्वं प्रत्याप्यते न तु वैपरीत्यं स्त्रीधने व्यभिचारात्। तथाच पत्युः स्वत्वनाशात्पत्न्याः स्वत्वनाशः सिद्ध एवेति शास्त्रस्य संसृष्टभ्रातृविषयत्वं निष्प्रत्यूहमिति कान्योन्याश्रयः पत्नीस्वत्वनाशस्य प्रमाणान्तरसिद्धत्वादत आह ॥ ० ॥

किञ्च। शङ्खलिखितादिवचनानामविभक्तसंसृष्टगोचरत्वेऽविभक्तस्य संसृष्टस्य च धनन्तद्विधभ्रातृगामि । तस्य तु तथाविधस्याभावे पितरौ लभेतामित्यन्वयो वाच्यः। तदा च विकल्पनीयम्। किं विभक्तासंसृष्टौ पितरौ गृह्णीयाताम् । उताविभक्तसंसृष्टौ। तत्र न प्रथमः कल्पः। पत्नी दुहितरश्चेत्यादिना विभक्तासंसृष्टयोः पित्रोः पत्नीबाध्यत्वात् । कथं पत्नीतः पूर्व्वं तयोरधिकारः। नापि द्वितीयः। अविभक्तसंसृष्टभ्रातृसद्भावेऽप्यविभक्तसंसृष्टपितृग्राह्यत्वस्य सर्व्वेषामविवादात्। किञ्च। यथा पित्रा भ्रात्रा च विभक्तासंसृष्टधने शरीरदातृतया आत्मा वै जायते पुत्र इत्येकत्वश्रुतेर्धनशरीरयोश्च प्रभुत्वात् । तत्पितृदेयपितामहप्रपितामहपिण्डद्वयोश्च सपिण्डनेन मृतस्य भोक्तृत्वाज्जीवति च पितरि पुत्राणामपार्वणपिण्डदानाभावात् भ्रातृभ्यश्च पूर्व्वं पितुरधिकारः तथेतरत्रापि युक्तः ॥ ० ॥

किञ्चेति। तद्विधोऽविभक्तसंसृष्टान्यतरः। तस्य भ्रातुः। तथाविधस्य उक्तान्यतरस्य। पत्नी दुहितरश्चेत्यादियाज्ञवल्क्यवचनस्य विभक्तासंसृष्टविषयत्वमेव कुत इति चेदत्र

सूत्रमपि: सर्व्वव्याख्यायाः पत्न्याः प्रथममधिकारित्वबोधक
तया तत्परत्वस्यैव निश्चयादित्याशयादित्याचष्टे । वस्तुतः
शङ्खादिवचनानां संसृष्टाविभक्तभ्रातुः पत्नीतः पूर्व्वमधिकार
बोधकत्वेऽपि पित्रोरपि तथाविधयोरेव पत्नीतः पूर्व्वमधिकार
बोधकत्वन्तुल्यन्यायादतः परिशेषादेव याज्ञवल्क्यवचनस्य
विभक्तासंसृष्टविषयत्वमिति भाव्यम् । पत्नीतः पूर्व्वमिति ।
शङ्खादिवचनादिति शेषः । अथास्मदिधानां बहूनामत्र
विवाद एव याज्ञवल्क्यवचनाद्विभक्तासंसृष्टस्य पितुर्भ्रातृबाध
कत्वे सिद्धे शङ्खाद्युक्तभ्रातृबाध्यतायाश्चाविभक्तसंसृष्टगोचर
त्वस्यैव संभवादतआह । किञ्चेति । ननु भ्रातृदेयपिण्डत्रये
सपिण्डनेन तस्य भोक्तृत्वात् भ्रातुरेव प्रागधिकारो युक्तइत्य
तआह । जीवति चेति । इतरथापि संसृष्टाविभक्तधनेऽपि ।
यदि चोक्तहेतुनपेक्ष्यापि संसर्गाविभक्तत्वयोरुत्कर्षइत्युच्यते ।
तदा पितृभ्रात्रोर्द्वयोरेव तदविशेषाद्युगपदधिकारः स्यादि
त्याह ॥ ० ॥

अविभागसंसर्गयोर्वा अविशेषात् पितृभ्रात्रो
स्तुल्यवदधिकारो युक्तो न तु भ्रातुरभावे पितुरिति
युक्तम् । किञ्चाविभक्तसंसृष्टौ पितरौ गृह्णीयाता
मिति द्विवचनमनुपपन्नम् माता सह विभागा

विभागयोरभावात्। अतएव धनसंसर्गाभावेऽपि।

यदाह बृहस्पतिः। विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः। पितृव्येणाथ वा प्रीत्या स तु संसृष्ट उच्यते। अनेनैतद्दर्शयति। येषामेव हि पितृभ्रातृपितृव्यादीनां पितृपितामहार्जितद्रव्येणाविभक्तत्वमुत्पत्तितः सम्भवति। तएव विभक्ताः सन्तः परस्परप्रीत्या यदि पूर्व्वकृतविभागध्वंसेन यत्तव धनन्तन्मम धनं यन्मम धनन्तत्तवापीति एकत्र गृहे एकगृहिरूपतया संस्थिताः संसृज्यन्ते न पुनरनेकरूपाणां द्रव्यसंसर्गमात्रेण सम्भूयकारिणां वणिजामपि संसर्गित्वम्। नापि विभक्तानां द्रव्यसंसर्गमात्रेण पूर्व्वोक्तप्रीतिपूर्व्वकाभिसन्धानं विना। अतः संसर्गित्वाविभक्तत्वयोर्मात्रा सहासम्भवात्। कथं मातृगतो भ्रातृसद्भावाधिकारविरोधः समाधेयः ॥०॥

अविभागेत्यादि। अथ मन्वादिवचनयाज्ञवल्क्यादिवचनेषु क्रमेणाधिकारावगमात् यौगपद्यासम्भवः। तथाच तद्भोग्यपिण्डद्वयदातृपितृपत्नया तद्भोग्यपिण्डत्रयदातृतया तद्देयमातामहादिपिण्डत्रयदातृतया च भ्रातुरुत्कर्षात्। तच्च

मेवैवाधिकारी युक्तः। विभक्तासंसृष्टपितुः प्रागधिकारस्तु वार्त्तिकएवेत्यतआह। किञ्चेति। अविभागः साधारणम्। अतएव विभागविरहादेव। उत्पत्तितइति। तेन साहच्या दृत्तिः तस्याधनसम्बन्धस्य परिणयाधीनत्वात्। विभाग ध्वंसेन विभागाभिव्यक्तप्रादेशिकस्वत्वध्वंसेन। यश्चेति। यावदेकत्र स्थापनमितिशेषः। अन्यथा विभक्ताः पितृवित्ता च्चेत्संप्रीत्यैकत्र संस्थिताः। पुनर्विभागकरणे तेषां ज्यैष्ठ्यं न विद्यतइत्यादिवचनोपदेशितपुनर्विभागस्य वैयर्थ्यापत्तेः। एते न संसर्गे सति स्वत्वं सर्वेषां सर्व्वधनेषु सामुदायिकस्वत्वमेव नतु विभागात् पूर्व्वमिव प्रादेशिकस्वत्वमिति सिद्धम्। अत्र चाकाभिसन्धानवर्त्तिनासाधारणधनशरीरायासाभ्यां संसृष्टि नैकेनार्जितधनेऽपि सर्वेषामेव संसृष्टिनां सामुदायिकस्वत्वमिति बोध्यम्। अधिकारविरोधः। अधिकारपौर्वापर्य्यविरोधः। स्वसिद्धान्तमाह ॥०॥

सम्प्रति धीमद्भिः समाधीयते। तत्र विष्ण्वादि वचनेभ्यः पुत्राद्यभावमात्रेण पत्न्यधिकारः स्पष्ट मवगम्यते। युक्तं चैतत् यन्मृतधनम्पुत्रपौत्राणामेव प्रथमम्भवति। पौत्रै

तथाहि मनुविष्णू। पुन्नाम्नो नरकाद्यस्मात्पित रन्त्रायते सुतः। तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा॥

तथा हारीतः। पुन्नामा निरयः प्रोक्तश्छिन्नतन्तुश्च नैरयः। तत्र वै त्रायते यस्मात्तस्मात्पुत्र इति स्मृतः॥

तथा शङ्खलिखितौ। पितॄणामनृणो जीवन् दृष्ट्वा पुत्रमुखम्पिता। स्वर्गी सुतेन जातेन तस्मिन्सं न्यस्य तदृणम्॥ अग्निहोत्रन्त्रयो वेदा यज्ञाश्चैव सदक्षिणाः। ज्येष्ठपुत्रप्रसूतस्य कलां नार्हन्ति षोड शीम्॥

अत्र मनुशङ्खविष्णुवसिष्ठहारीताः॥ पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते। अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति पिष्टपम्॥

तथा याज्ञवल्क्यः। लोकानन्त्यन्दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः॥ ०॥

संप्रतीति। नच स्वार्जितधने प्रथमं भ्रात्रधिकारः पितृ सम्बन्धिधने पितुरधिकार इति रत्नाकराद्यभिहितमेव समाधानं युक्तमितिवाच्यम्। प्रमाणाभावादिनिगमनाविर हेण वैपरीत्यस्यापि सम्भवाच्च धीमद्भिरस्मदभिमतार्थवादि भिर्हलायुधादिभिरित्यर्थः। विष्ण्वादीत्यादिना याज्ञवल्क्य

परिग्रहः। वचनेभ्यः अपुत्रधनं पत्न्यभिगामीति पत्नीदुहितरश्चैवेत्यादिवचनेभ्यः । वचनस्थपुत्रपदस्य वक्ष्यमाणयुक्त्या प्रपौत्रपर्य्यन्तपरत्वादाह । आदीति । पौत्रप्रपौत्रपर्य्यन्तपरिग्रहार्थं। स्पष्टमिति। अपुत्रधनं पत्न्यभिगामीत्यभिधानादेषामभावे पूर्व्वेषां धनभागुत्तरोत्तर इत्यभिधानाच्चेति भावः। अस्य न्यायमूलत्वमाह । युक्तमिति । निरयो नरकः नैरय इति निरयगामीत्यर्थ इति केचित्। तदसत् । तत्रेत्यनन्वयापत्तेः। किन्तु नरक एवार्थः तद्धि तस्याविवक्षणात्। तत्र तस्मात् प्रसूतस्येति भावे क्तः। तेन जननादित्यर्थः। ब्रध्नस्य आदित्यस्य। विष्टपं लोकं ॥ ७॥

तदेवं पुत्रादिभिर्जन्मतः प्रभृति पितुः परलोकोचितमहोपकारनिष्पादनात् मृतस्य तस्य पार्व्वणविधिना पिण्डदानात् पुत्राद्यर्थं तद्धनं मृतमेवोपकरोमीति न्यायप्राप्तं पुत्रादीनां स्वामित्वं युक्तं तथोपकारकत्वेन धनसम्बन्धं

मनुरप्याह ॥ ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः। पितृणामनृणश्चैव स तस्मात्सर्व्वमर्हति । तस्मादिति हेतूपन्यासाद्दायभागप्रकरणे च पुत्रादीनां नानाविधश्राद्धाद्युपकारकत्वकीर्त्तनस्यानन्य

प्रयोजनकत्वात्। उपकारकत्वादेव धनसम्बन्धो मनोरनुमतइति गम्यतेऽतएव पुत्रपदं प्रपौत्रपर्य्यन्त तत्पर्य्यन्तानामेव पार्व्वणविधिना पिण्डदानोपकारकत्वस्याविशेषादन्यथा पुत्रपदस्य स्वार्थत्यागानुपपत्तेः॥ पौत्राधिकारज्ञापकं वचनङ्कथञ्चित् यदि लभ्येतापि प्रपौत्रस्य तु न पृथक्वचनमस्ति। तस्मादुपकारकत्वादेव प्रपौत्रस्याप्यधिकारइतिपुत्रपदमुपलक्षणम्।

अतएव बौधायनः॥ प्रपितामहः पितामहः पिता स्वयं सोदर्य्याभ्रातरः सवर्णायाः पुत्रः पौत्रः प्रपौत्र एतान विभक्तदायादान्सपिण्डानाचक्षते॥ विभक्तदायादान् सकुल्यानाचक्षते॥ सत्स्वङ्गजेषु तद्गामी ह्यर्थोभवति॥ सपिण्डाभावे सकुल्यः॥ तद्भावे चाचार्य्योऽन्तेवासी ऋत्विग्वा हरेत्तद्भावे राजा॥ ० ॥

युक्तं न्यायमूलश्रुतिबोधितम्। अतएव उपकारकत्वेन धनसम्बन्धस्य मनोरनुमतत्वादेव। अन्यथा न्यायमूलत्वाभावे। ननु वाचनिकएवायमधिकारक्रमः पौत्रप्रपौत्रयोरपि वचनान्तरादेवाधिकारोभविष्यतीत्यत आह। पौत्राधिकार इति। कथं चिदिति। पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनमित्यनेन पुत्रिकापुत्रस्य पौत्रतयाधनाधिकारप्रति

पाद्दनात्। पौत्रस्यापि धनाधिकारस्यार्थतः प्राप्तेरित्यर्थः एवं अपुत्रपौत्रे संसारे दौहित्राधनमाप्नुयुरित्यनेनापि तथैव पौत्राधिकारलाभ इत्यर्थः॥०॥

अस्यार्थः। पित्रादिपिण्डत्रयेषु सपिण्डनेन भोक्तृत्वात् पुत्रादिभिश्च त्रिभिः तत्पिण्डस्यैव दानात् यश्च जीवन् यत्पिण्डदाता स मृतः सन् सपिण्डनात्तत्पिण्डभोक्ता। एवञ्च सति मध्यस्थितः पुरुषः पूर्व्वेषां जीवन् पिण्डदाता स मृतस्तत्पिण्ड भोक्ता च परेषां जीवतात्पिण्डसम्प्रदानभूत आसीत्। मृतैश्च तैः सह दौहित्रादिदेयपिण्ड भोक्ता। अतोयेषामयम्पिण्डदाता येवा तत्पिण्डदातारस्तेऽविभक्तपिण्डरूपन्दायमश्नन्तोत्यविभक्तदायादाः सपिण्डाः। पञ्चमस्य तु पूर्व्वस्य मध्यमः पञ्चमेन पिण्डदाता। न च तत्पिण्डभोक्ता। एव मधस्तनोपि पञ्चमेन मध्यमस्य पिण्डदाता नापि तत्पिण्डभोक्ता। एतेन वृद्धप्रपितामहात्प्रभृतयस्त्रिपूर्व्वपुरुषाः प्रनप्तुः प्रभृत्यधस्तनास्त्रयः पुरुषा एकपिण्डभोक्तृत्वाभावात् विभक्तदायादाः सकुल्या इत्याचक्षते। इदञ्च सपिण्डत्वं सकुल्यत्वञ्च दाय ग्रहणार्थमुक्तम्।

अतएव मनुनापि न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुरित्यभिधाय कुतइत्यपेक्षायां त्रयाणामुदकं कार्य्यन्त्रिषु पिण्डः प्रवर्त्तते। चतुर्थः सम्प्रदातैषाम्पञ्चमो नोपपद्यतइत्युक्तम्। अशौचाद्यर्थन्तु पिण्डलेपभुजामपि तद्दत्तपिण्डलेपभोक्तृत्वेन सपिण्डत्वम् मार्कण्डेयपुराणे निर्दिष्टम्। यथा। पिण्डलेपभुजश्चान्ये पितामहपितामहात्। प्रभृत्युक्तास्त्रयस्तेषां यजमानश्च सप्तमः ॥ इत्येवं मुनिभिः प्रोक्तः सम्बन्धः साप्तपौरुषः। अशौचकर इत्यर्थः। अतएव मनुनाप्युक्तमशौचप्रकरणे।

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते। समानोदकभावस्तु जन्मनाम्नोरवेदने ॥ अन्यथा त्रयाणामित्यनेन विरोधः स्यात्। प्रपौत्रपर्य्यन्ताभावे तु वैधव्यात्प्रभृतिव्रतादिना भर्त्तुः परलोकहिताचरणेन पुत्रादिभ्योजघन्येति तेषामभावे धनहारिणी पत्नी॥०॥

दौहित्रादीत्यादिना जीवत्पुत्रान्तरादिपरिग्रहः। प्रतिनप्तुः प्रपौत्रात्। साप्तपौरुषसापिण्डविधिबोधितविरोधमाशंक्याह। इदमिति। इदं पुरुषत्रयमात्रविश्रान्तम्। वैधव्यात्प्र

भूतीति। अनेन अन्नप्रभृत्युपकारकेभ्यः पुत्रादिभ्योऽजघन्यत्व मुपपादितं एवम्पार्वणपिण्डदानाभावादपि अजघन्यत्वं बोध्यं नच पुत्रादिभ्यः पूर्व्वं परिणयनात्प्रभृत्याश्रमधर्म्माचरणेन उपकारकत्वात्तस्याश्चुत्कर्षश्चावदर्त्तिं वाच्यम्। अलाभे चैव कन्यायाः स्नातकव्रतमाचरेदित्यादिना आश्रमधर्म्माचरणे तस्या अनियतत्वाच्चान्नप्रभृतिमदुपकारकपुत्रादितोऽजघन्यताया दुर्व्वारत्वाच्च ॥ ० ॥

तदाह व्यासः। मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्यव्रते स्थिता। स्नाता प्रतिदिनन्दद्यात् स्वभर्त्रे सतिलाञ्जलीन् ॥ कुर्य्याच्चानुदिनम्भक्त्या देवतानाञ्च पूजनम्। विष्णोराराधनञ्चैव कुर्य्यान्नित्यमुपोषिणाम्॥ दानानि विप्रमुख्येभ्यो दद्यात् पुण्यविवृद्धये। उपवासांश्च विविधान् कुर्य्यात् शास्त्रोदितान् शुभे ॥ लोकान्तरस्थम्भर्त्तारमात्मानञ्च वरानने। तारयत्युभयं नारी नित्यन्धर्म्मपरायणा ॥ तदेवमादिभिर्व्वचनैः पत्न्या अपि नरकनिस्तारकत्वश्रुतेः धर्म्मशीलतया वाऽकार्य्यं कुर्व्वती पुण्यफलसमत्वेन भर्त्तारमपि पातयतीति तदर्थन्तद्धनं पूर्व्वस्वाम्यर्थमेव भवतीति युक्तम्पत्न्याः स्वाम्यम् ॥ ० ॥

स्वभर्त्तुरिति। उपलक्षणमेतत्। श्वशुरार्य्यश्वशुराभ्यामपि बोध्यं। तर्पणं प्रत्यहं कार्य्यं भर्त्तुः कुशतिलोदकैः। तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्व्वकं॥ इति काशीखण्डवचनात्। अत्र प्रत्यहमिति विधानादेषान्तर्पणं नित्यं अन्येषां काम्यमिति बोध्यम्। विष्णोरिति। आराधनं पतिबुद्ध्या विष्णोश्च पूजनं कार्य्यं। पतिबुद्ध्या नचान्यथा इति काशीखण्डवचनात्। उपवासांश्चेति। शास्त्रोदितान् नित्यान् काम्यांश्चाहोरात्राभोजनरूपान् भोजनचतुष्टयनिवृत्तिरूपांश्च उपवासांश्चेत्यर्थः। काम्योपवासांश्च महाभारतोक्ताः। यथा त्रिरात्रम्पञ्चरात्रं वा पक्षव्रतमथापि वा। मासोपवासान्कुर्य्याद्वा चान्द्रायणमथापि वा इति। त्रिरात्रोपवासेन वैश्यशूद्रयोः त्रिरात्रं पञ्चरात्रं वा तेषां पुष्टिर्न विद्यते। वैश्यशूद्राश्च येमोहादुपवासं प्रकुर्वते। इति भारतवचनात्। पुष्टिर्व्रतफलमिति। कश्चित्तु उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह। उपवासः स विज्ञेयो न शरीरविशोषणमिति पारिभाषिक उपवासपरमेव अत्रोपवासपदमित्याह। तन्न तस्य समुदितस्यैकविधत्वेन त्रिविधानित्यनुपपत्तेः नच उपवाससामान्यपरत्वे चाशक्यानुष्ठानदोषः सर्व्वस्मिन्नेवाह्निकाम्योपवाससम्भवादिति वाच्यं। एतस्य सम्भवपरत्वाद्दानवत्। लोकान्तरस्थं दुःखदापकृष्टस्थानस्थमुत्तारयति सुखदोत्कृष्टस्थानमापयति

श्रुतेरिति युक्तं पत्न्याः स्वत्वमिति वक्ष्यमाणहेतुः पुण्यापुण्य इति। शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समेति वचनादित्यादिः। पातयतीति। इत्यनेनापीत्यर्थः ॥०॥

अतः शङ्खादिवचनेषु व्यवहितयोजना कार्य्या। अपुत्रस्य स्वर्य्यातस्य धनं ज्येष्ठा पत्नी हरेत्। तदभावे पितरौ हरेताम्। तदभावे भ्रातृगामीति। तदभाव इति मध्यपठितम्पूर्व्वेण भ्रातृगामीत्यनेन परेण च पितरौ लभेतामित्यनेन सम्बध्यते। अविरोधात्। न्यायस्योक्तत्वाच्च ॥ नत्वश्रुताविभक्तसंसृष्टगोचरत्वकल्पना अतोऽविशेषेणैव विभक्तत्वाद्यनपेक्षयैवापुत्रस्य भर्त्तुः कृत्स्नधने पत्न्यधिकारो जितेन्द्रियोक्त आदरणीयः। पत्नीत्वञ्च प्रथममुत्तमवर्णायाः ज्येष्ठा पत्नीत्यभिधानात् ॥—॥

अतइति। पत्न्यधिकारस्य न्यायसिद्धत्वं यतोऽतइत्यर्थः। शङ्खादिवचनेष्विति। अपुत्रस्य स्वर्य्यातस्य भ्रातृगामि धनन्तदभावे पितरौ लभेतां पत्नी वा ज्येष्ठा इत्यादिप्रागुक्तेष्वित्यर्थः। व्यवहितयोजनामेवाह। अपुत्रस्येति अविरोधादिति। विष्णुयाज्ञवल्क्यशङ्खवचनानामपरस्परविरोधपरीहारायेत्यर्थः।

चयस्य व्यवहितयोजनायां मध्यपठितस्य उभयत्रान्वये उभयचैव हेतुः ननु विष्ण्वादिवचनेऽपि व्यवहितयोजनया विरोधपरिहारसम्भवे व्यवहितयोजनायां विनिगमकाभाव इत्यत आह । न्यायस्येति । वैधव्यात् प्रभृतीत्याद्युक्तन्यायस्येत्यर्थः । तथाच न्याय एव विनिगमकमिति भावः । निराकृतमपि केचिदादिमतं हेत्वन्तरेणापि पुनर्निराकरोति । नत्विति । तथाचाश्रुतकल्पनागौरवपराहतमपि तदिति भावः । अविशेषेणैव वचने विभक्तत्वादिविशेषानुपादानेनैव विभक्तत्वाद्यनपेक्ष्यमित्यत्रायं हेतुः। वक्ष्यमाणनारदवचनविरोधपरीहाराय सवर्णायास्तद्भावे चानन्तरवर्णायाश्च पत्नीत्वं नत्वन्यासां भार्य्याणामिति व्यवस्थापयति । पत्नीत्वञ्चेति । प्रथममित्यनेन तदसम्भवेऽनन्तरवर्णाया अपि तथात्वं सूचितं । तत्र प्रमाणमाह । ज्येष्ठेति अभिधानात् । ज्येष्ठा वा पत्नीत्यादिना शङ्खादिभिरिति शेषः । ननु शङ्खादिवचने ज्येष्ठायाः पत्नीत्वमवगम्यते नतु सवर्णाया इत्यत आह ॥ ० ॥

वर्णक्रमेण ज्येष्ठत्वात्तदाह मनुः । यदि स्वाश्च पराश्चैव विन्देरन् योषितो द्विजाः । तासां वर्णक्रमेणैव ज्यैष्ठ्यं पूजा च वेश्म च ॥ अतः परिणयनक्रनिष्ठापि सवर्णा ज्येष्ठैव तस्या एव यज्ञादिषु व्यापाराधिकारात् पत्नीत्वम् ।

तथाच मनुः। भर्त्तुः शरीरशुश्रूषान्धर्मकार्य्यञ्च नैत्यिकम्। स्वास्वैव कुर्य्यात्सर्व्वेषां नान्यजातिः कथञ्चन॥ यस्तु तत्कारयेन्मोहात्स्वजात्या स्थितयान्यया। यथा ब्राह्मणचाण्डालः पूर्व्वदृष्टस्तथैव सः॥ सवर्णायाः पुनरभावे अनन्तरवर्णा पत्नी।

यथा विष्णुः। सवर्णाया अभावे त्वनन्तरयैवापदि नत्वेव द्विजः शूद्रया धर्म्मकार्य्यं कुर्य्यादित्यनुवर्त्तते। तेन ब्राह्मणस्य ब्राह्मणी पत्नी तदभावे क्षत्रियाप्यापदि। नतु परिणीते अपि वैश्याशूद्रे। क्षत्रियस्य क्षत्रिया पत्नी तदभावे वैश्यापि। अनन्तरवर्णत्वान्न शूद्रा। वैश्यस्य वैश्यैवैका॥ ०॥

वर्णक्रमेणेति। स्वाः सजातीयाः एतास्त्वानुलोमजातीयाः प्रतिलोमपरिणयनविरोधात्। तथाचैतद्वचनप्राप्तवर्णज्येष्ठत्वस्य सवर्णायामेव पर्य्यवसाने सवर्णायाः पत्नीत्वं सिद्धमिति भावः। अतो वर्णक्रमेण ज्येष्ठत्वं यतः परिणयनकनिष्ठापीति। क्षत्रियायां सत्याम् अथमपरिणीतब्राह्मणीमरणे पश्चात्परिणीता ब्राह्मणी परिणयनकनिष्ठा बोध्या अन्यथा व्युत्क्रमविवाहापत्तेरितिबोध्यम्। ननु ज्येष्ठायाः पत्नीत्वेऽन्यासां पत्नीत्वे बाधकाभावः। तथाच पत्नीत्वं सर्व्वासामेव ज्येष्ठपत्न्याः पुनर्धर्माधि

कारइत्येव किं तत्राह्वाह। तत्त्वाह्वैति। यज्ञादीति। तथाच पत्युर्नोयज्ञसंयोगइति व्याकरणस्मृत्या यज्ञसम्बन्ध एव पत्नीपदस्य साधितत्वात् सवर्णाया एव यज्ञाधिकारात्। पत्नीत्वं नान्यासामितिभावः सवर्णाया एव यज्ञाधिकार इत्यत्र प्रमाणमाह। तथाचेति। स्वजात्या स्थितयेति। एतेन स्वजात्याऽभावेऽन्यासामपि पत्नीत्वं प्रतिपादितं। ननु सवर्णायाअभावे इतरासां सर्व्वासामेव पत्नीत्वं स्यात्। तत्कथं सवर्णानन्तरवर्णयोरेव पत्नीत्वमभिहितं। तत्राह। सवर्णायाः पुनरिति। प्रमाणमाह। यथेति। अनन्तरयैवेत्येवकारेण व्यवहितवर्णाव्यवच्छेदः। वैश्यस्यानन्तरवर्णत्वेन शूद्रायाधर्मप्रसक्तौ निषेधयति॥ ०॥

नत्वेव द्विजः शूद्रयेति द्विजमात्रस्यैव शूद्रानिषेधात्। अनेनैव पत्नीभावक्रमेणैव धनाधिकारिता बोद्धव्या। अतः परिणीतस्त्रीणामप्यपत्नीत्वात्तदभिप्रायकमेव नारदवचनम्।

भ्रातृणामप्रजाः प्रेयात्कश्चिच्चेत्प्रव्रजेद्यदि। विभजेरन्धनन्तस्य शेषास्ते स्त्रीधनं विना॥ भरणञ्चास्य कुर्वीरन् स्त्रीणामाजीवितक्षयात्। रक्षन्ति शय्यां भर्त्तुश्चेदाच्छिन्द्युरितरासु च॥ तथा तस्यैव। अन्यच

ब्राह्मणात्किन्तु राजा धर्मपरायणः । तत्स्त्रीणां जीवनन्दद्यादेष दायविधिः स्मृतः ॥ तदीयस्त्रीणामपत्नीनां वर्त्तनधनदानम् । पत्नीनाम्पुनः कृत्स्नधनेऽधिकारित्वेत्यविरोधः ॥ ०॥

पत्नीवेति । एतेनेदमपि सिद्धं यद्ब्राह्मणीक्षत्रिययोर्द्वयोरप्यभावे अत्यन्तापदि वैश्यापि ब्राह्मणस्य धर्मचारिणी द्विजत्वपुरस्कारेणैव शूद्रामात्रनिषेधात् । अन्यथा ब्राह्मणक्षत्रिययोः शूद्रासमत्वभावेन द्विज इति विहाय वैश्य इत्येव ब्रूयात् अतएवानुपदं वक्ष्यति द्विजमात्रस्यैव शूद्रानिषेधादिति । चूडामणिस्तु पत्नीत्वस्येत्यादिग्रन्थमन्यथा व्याचष्टे यथा पत्नीत्वस्येति याज्ञवल्क्यविष्ण्वादिवचनैरपुत्रधनम्पत्न्यभिगामीत्युक्तं मनुना । तस्या एव ज्येष्ठत्वस्य यदि स्यात्सेति वक्ष्यमाणादुत्तमवर्णाया एव तत्त्व च भर्त्तुः शरीरशुश्रूषामित्यादिमनुवचनात् । पतिशुश्रूषादीनामेव प्रयोजकत्वं विष्णुना चानन्तरवर्णाया अप्युक्तं । अतः सकलवचनैकवाक्यतया ज्येष्ठाया धर्मचारित्वापगतेः धनहारिण्याश्च याज्ञवल्क्यादिभिः पत्नीपदप्रयोगात् । वक्ष्यमाणवचने चातथाभूतवर्त्तनमाचन्द्राभ्रावादीनां धनाधिकारित्वावगमात्सवर्णान्तरवर्णयोरेव पत्नीत्वमिति ॥ चमजइति ॥ पुत्रादिमातृपर्य्यन्ताभाववानि

त्यर्थः । शेषाइतरभ्रातरः तेषामेव प्रकृतत्वात् अतः स्त्रीणां भरणमात्रविधानात्तदभावेऽपि भ्रातृणामधिकारः प्रतीयते। तस्यैव नारदस्यैव वचनान्तरमितिशेषः । अपत्नीनामिति व्यवस्थितवर्णानां शूद्राणामित्यर्थः । अतएव स्त्रीणां पत्नीत्वा पत्नीत्वाभ्यां द्वैविध्यादेव पत्नीस्त्रियोर्भेदेन उक्तार्थे स्मृतिसार समाह ॥ ० ॥

अतएव वृहस्पतिः । येऽपुत्राःक्षत्रविट्शूद्राः पत्नीभ्रातृविवर्जिताः। तेषां धनं हरेद्राजा सर्व्व स्याधिपतिर्हि सः। पत्न्यभावे राज्ञोधनसम्बन्धन्दर्श यति। नारदस्तु। तत्स्त्रीणां जीवनं दद्यादितिवर्त्तन धनन्दत्वा राज्ञा सर्व्वधनं ग्रहीतव्यमिति योविरोधः स पत्नीस्त्रियोर्भेदेन समाधेयः। अतएव पत्न्यधि कारवचनेषु पत्नीपदानुस्मृतिः । वर्त्तनवचनेषु च स्त्रीना[illegible]र्य्यादिशब्दप्रयोगः । यदपि देवल वचनम्।

ततोदायमपुत्रस्य विभजेरन्सहोदराः। तुल्या दुहितरोवापिध्रियमाणःपितापिवा॥सवर्णाभ्रातरो माता भार्य्याचेति यथाक्रमम्।एषामभावे गृह्णीयुः

कुल्यानां सद्मवासिनः॥ तुल्याः सवर्णादुहितरः सवर्णाभ्रातरः सापत्ना अभिमताः। सोदरभ्रातॄणां स्वपदोपात्तत्वाद्विशेषेणानुपपत्तेः। तत्रापि सोदरादिभार्य्यान्तस्य लिखनक्रमेनाधिकारक्रमार्थः। विष्णवादिविरोधात्। किञ्च। विष्णवाद्युक्तक्रमेण गृह्णीयुरित्येतदर्थः। लिखनक्रमेऽनास्थाव्यञ्जनार्थमेव दुहितरोवापि पितापि वेत्योपि वाशब्दमुभयत्र प्रयुक्तवान्। तच्चान्यत्राप्यनुषज्यते। तेन सोदरा वा दुहितरोवा पिता वेत्येनास्थाकीर्त्तनक्रमस्य देवलवचनेन दर्शिता। यच्च बालकेनोक्तम्। असवर्णाविषयं वा युवत्यभिप्रायं वा अविभक्तसंसृष्टविषयं वा शङ्खादिवचनमिति॥०॥

[illegible]ति। म्रियमाणोधनाधिकारयोग्यः तेन पतितादिव्यावृत्तिः। विशेषानुपपत्तेरिति। अव्यावर्त्तकत्वेन वैयर्थ्यादिति भावः। विष्णवादिविरोधादिति। अत्र विनिगमनान्याय एवेति प्रागेवोक्तमिति भावः। असवर्णाविषयमेति। एतन्मते पत्नीवा ज्येष्ठेत्यादिशङ्खवचनेऽकारप्रश्लेषात् अज्येष्ठादत्यर्थोऽवगेयः तेन नविरोधः। युवत्यभिप्रायमेति। विधवा यौवनस्था च नारी भवति कर्कशा। आयुषः क्षपणार्थाय दातव्यं स्त्रीधनं

सहेति पुवत्याः प्राग्भारवमासेपयोगिस्रनदानमात्रविषय कत्वादीतिवचनैकमूलत्वादितिभावः अविभक्तेति । केचित्तु कन्यायोग्य हेतुः ॥ ० ॥

तेनाव्यवस्थितशास्त्रार्थकथनेनात्मनो बालरूपत्व मेव प्रकटीकृतम् ✗ सन्देहादेकतरानुष्ठानानुप पत्तेः । यदप्यनूढावरुद्धाभिप्रायं वर्त्तनवचनं वर्णितम् ✗ तदपि धर्म्मपत्नीनामनुग्रहार्थमिति चैव मेव ✗ वर्त्तनविधानविषयस्य स्त्रीणाम्पूर्व्वमेव दर्शि तत्वात् । किञ्च । सवर्णासवर्णत्वाभ्यां पत्नीकृतवि शेषेऽपि पित्रोर्भ्रातॄणां चाधिकारे कथं विरोधः समा धेयः । संसर्गाभ्यांच्चेत्सएव विशेषः सर्व्वव्यापी संसर्ग भवतु । किम्पत्नीगोचरसावर्णादिविशेषपरिकल्पनेन यमपि विशेषो दूषितोऽस्माभिः पूर्व्वप्रपञ्चेन । सोद रासोदरकृतस्य विशेषोऽनुपस्यतिना पराहतः ॥ ० ॥

तेन बालकेन । अव्यवस्थितशास्त्रार्थकथनेन निर्णयाभवे शास्त्रार्थकथनेन । बालरूपत्वं बालकवत्प्रवृत्त्ययोग्यत्वाभा दित्वं । सन्देहादिति । विधूककोटिषु विहिताविहितत्वसन्देहा दित्यर्थः । एकतरेति । अनुष्ठानाप्रवृत्तिः अथ पूर्वोत्तर

पत्नद्वये हारीतवचनविरोधोऽपि द्रष्टव्यः । अत्र तेनैवापर
मुक्तं स्त्रीणां कृत्स्नधनाधिकारवचनानां वर्त्तनमात्रविधायक
वचनानाञ्च विरोधपरीहाराय वर्त्तनवचनमनूढावरुद्धा
विषयं कृत्स्नधनाधिकारवचनन्तु परिणीताविषयमिति
व्यवस्थापितन्तदपि दूषयति । यद्यपीति । अवरुद्धा अन्तः
पुरचारिणी भोग्या कर्म्मकरी । धर्म्मपत्नीनामिति । अवरुद्धा
नामित्यर्थः अनुपहावर्त्तनविधानेन सोपहासाचेयं अव
रुद्धासु धर्म्मपत्नीत्वोक्तिः वस्तुतस्तासामभार्य्यत्वात् वर्त्त
नमपि कुत इत्युपहासः । यद्वा धर्म्मपत्नीनामिति यथाश्रुतार्थ
कमेव । अनुपहार्थमिति । तासामधिकारबोधनादित्यभि
प्रायः । किम्पत्नीगोचरेति । संसर्गासंसर्गयोः प्रयोजकत्वावश्य
कत्वे किमधिकेन सवर्णत्वादीनां प्रयोजकत्वकल्पनेनेति भावः ।
ननु मास्तु विशेषकल्पनं किन्तु संसर्गासंसर्गाभ्यामेव विशेषः
सर्व्वव्यापी भवत्वित्यत आह । अयमपीति । संसर्गासंसर्गकृत
इत्यर्थः पूर्व्वप्रपञ्चेन केचित्त्वादिमतदूषणावसरे तद्वृहस्पति
वचनविरुद्धमित्यादिप्रपञ्चेन । अत्र पत्नीतः पूर्व्वं सोदरस्या
धिकारः पश्चात्सोदरस्येति केचित् समादधिरे तदपि दूष
यति । सोदरेति । अत्र रत्नाकरादयः ब्रह्मचर्य्यव्रते स्थितेति
वचनात्सम्यग्विधवानां व्रतानुष्ठायीणां स्त्रीणां प्रथमं सर्व्वधना
धिकारः । किञ्चिद्व्रतचारिणीनामव्यभिचारिणीनान्तदनन्त

रमधिकारः शतमृत्नामामलयाविधानां वर्त्तनमात्राधिकारः तासामेव पूर्वं खावधिकारः व्यभिचारिणीनां वर्त्तनेऽपि नाधिकार इतिव्यवस्थामाहुः। अत्रापि किञ्चेत्याद्युक्तदूषणं द्रष्टव्यम्॥०॥

तदाह। सकुल्यैर्व्विद्यमानैस्तु पितृमातृसनाभिभिः असुतस्य प्रमीतस्य पत्नी तद्भागहारिणी॥ सनाभयः सहोदराः। तेषु सत्स्वपि पत्न्या धनसम्बन्धम्बोधयति। तद्भागशब्दाच्च कृत्स्नएव भर्तृभागोऽवगम्यते। न पुनस्तदेकदेशः। तस्मादस्मदर्शितैव व्यवस्थाशास्त्रार्थः। पत्नीच भर्तृधनं भुञ्जीतैव परं नतु तस्य दानाधानविक्रयान् कर्त्तुमर्हति। तदाह। कात्यायनः। अपुत्रा शयनम्भर्त्तुः पालयन्ती गुरौ स्थिता। भुञ्जीता मरणात् क्षान्ता दायादा ऊर्द्धमाप्नुयुः॥ गुरौ श्वशुरादौ भर्तृगृहे स्थिता यावज्जीवं भर्तृधनम्भुञ्जीत। नतु स्त्रीधनवत्स्वच्छन्दन्दानाधानविक्रयानपि कुर्वीत। तस्यान्तु मृतायान्तदभावे ये दुहित्रादयोदायाधिकारिणस्ते गृह्णीयुः। न पुनर्ज्ञातयः। तेषां दुहित्रादिभ्योजघ

स्यत्वात् तद्बाधकत्वानुपपत्तेः । पत्नी हि तेषां बाधिका । तदधिकारस्य प्रागभावे प्रध्वंसे च बाधकाभावस्याविशेषाद्बाधानुपपत्तेः ॥ ० ॥

दानाधानेति । आधानसम्बन्धकं । चान्ता परिमिताहारेण क्षीणा । दायादाद्दुहित्रादयः । दुहित्रादीनामधिकारे हेत्वन्तरमाह । पत्नी हीति । हि यस्मात्पत्न्येव तेषां बाधिकेत्यर्थः । तेषां दुहित्रादीनां । प्रागभावइति । इदन्त्वनुत्पत्स्यमानस्यापि प्रागभावोऽस्तीति मतावलम्बनेनाभिहितन्तन्मतेऽनुत्पत्स्यमानस्यापि दुःखस्य प्रागभावार्थिनः प्रायश्चित्तादौ प्रवृत्तेः प्रायश्चित्तप्राक् दुःखं मे माभूदिति कामनायाश्चानुभविकत्वादिति । प्रागभावस्य प्रतियोगिव्याप्यत्वेन येन प्रागभावपरमत्यन्ताभावपरं तेन पतिस्वत्वएव मरणेन पत्न्याः प्राक्कालीनाधिकारात्यन्ताभावे इत्यर्थः । बाधकाभावस्येति स्वत्वप्रत्यासत्त्येव तस्याबाधकत्वमित्यभिप्रायः । वस्तुतोबाधबाधस्याः स्वत्वस्यैव प्रतिबन्धकत्वं नतु तस्याइतिबोध्यं ॥ ० ॥

नापि स्त्रीधनाधिकारिणो गृह्णीयुस्तेषां स्त्रीधनविषयत्वात् ४

कात्यायनेनैव च स्त्रीधनाधिकारिणां वचना न्तरैरुक्तत्वात् पुनरुक्तत्वापत्तेश्च। अतः पत्नीदुहि तरश्चेत्यादिना ये पूर्व्वपूर्व्वस्याभावे परभूताधिका रिणो निर्दिष्टास्ते यथा पत्न्यधिकारप्रागभावे गृह्णी युस्तथा जाताधिकारायाः पत्न्या अधिकारप्रध्वंसेऽपि भोगावशिष्टन्धनं गृह्णीयुः। तदानीं दुहित्रादीना मेवान्यापेक्षया मृतोपकारकत्वादुक्तो धनाधिकारः

तथा दानधर्म्मे स्त्रीणां। पतिदायस्तु उपभो गफलः स्मृतः। नापहारं स्त्रियः कुर्य्युः पतिदाया त्कथञ्चन ॥ ८ ॥

मापीति। दुहितृदौहित्राभावे पतिदायादगम्ये इतिशेषः। स्त्रीधनाधिकारिणो भर्त्रादयः। तेषामिति। तेषां धनाधि कारप्रतिपादकवचनस्य स्त्रीधनगोचरत्वादित्यर्थः। ननु प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव यदन्यतः। भर्त्तुः स्वाम्यं भवेत्तत्र शेषन्तु स्त्रीधनं स्मृतम्। इति कात्यायनवचनात्तदपि स्त्रीधनं भवत्येवेत्याशंक्याह। कात्यायनेनैवेति। पुनरुक्तेति। तथाच दायाधिकारवचनस्य पुनरुक्तत्वापत्त्या दायेन स्त्रीधन मिति भावः। तथात्वे एकस्यैव मुनेः स्त्रीधने विरुद्धाधिकारि द्वयकथनेन विरोधोऽपि द्रष्टव्यः। अत्र गोवृषन्यायात् दायत

हितरस्त्रीधनानां व्यवस्थाभेदो वचनाभ्यां भविष्यतीति नोक्तदो षइतिवाच्यम्। दायस्य स्त्रीधनत्वमङ्गीकृत्य स्त्रीधनवचनानां दायेतरस्त्रीधनपरत्वेन संकोचापेक्षया शेषन्तु स्त्रीधनमित्यत्र वचने शेषपदस्यैव मुनिपरिगणितस्त्रीधनपरतया सङ्कोचस्य न्याय्यत्वात्। दायस्य केनापि मुनिना स्त्रीधनमध्येऽगणनात्। अतएव विनियोगे स ईश्वर इति नापहारं स्त्रियः कुर्य्युरित्यादिना दाये तस्याः स्वातन्त्र्याभाव उपपद्यत इति। चूडामणिस्तु दायादपदस्य स्त्रीधनाधिकारिभर्त्रादिपरत्वं दोषान्तरमाह। पुनरुक्तत्वापत्तेरिति व्याचष्टे । उपसंहरति । अत इति । प्रागभाव इति । पूर्व्वोक्तार्थकयुक्तिमाह । तदानीमिति । पत्यौ मरण इत्यर्थः । नतु दानाधानेति यदुक्तं तत्र प्रमाणमाह । तथेति । चान्तेति पूर्व्ववचनस्वरसात् व्याचष्टे श्री० ॥

उपभोगोपि न सूक्ष्मवस्त्रपरिधानादिना । किन्तु स्वशरीरधारणेन पत्युरुपकारकत्वात्। देहधारणोचितोपभोगफलाभ्यनुज्ञानम्। एवञ्च भर्त्तुरौर्द्ध्वदेहिकक्रियाद्यर्थं दानादिकमप्यनुमतम् अत एव नापहारं स्त्रियः कुर्य्युरित्याह । अपहारश्च धनस्याप्यनुपयोगे भवति। अतएव वर्त्तनाशक्तौ आधानमप्यनुमतम्। तच्चाप्यशक्तौ विक्रयणमपि

व्यवस्थाविशेषात्। भर्त्तुरौर्द्ध्वदेहिकक्रियार्थमर्थानुरूपभर्तृपितृव्यादिभ्योदद्यात्।

तदाह। बृहस्पतिः। पितृव्यगुरुदौहित्रान् भर्त्तुः स्वस्रीयमातुलान्। पूजयेत्कव्यपूर्त्ताभ्यां वृद्धानाथातिथीन् स्त्रियः॥ पितृव्यपदम्भर्त्तुः सपिण्डपरम्। दौहित्रपदं भर्त्तुर्दुहितृसन्तानपरम्। स्वस्रीयपदम्भर्त्तुः स्वसृसन्तानपरम्। मातुलपदञ्च भर्त्तुर्मातृकुलपरम्। तदेवमादिभ्योदद्यात्। नपुनरेतेषु सत्स्वेव स्वपितृकुलेभ्यः प्रदद्यात्। पितृव्यादिवचनानर्थक्यात्। तदनुमत्या तु स्वपितृमातृकुलेभ्योपि दद्यात्।

तदाह। नारदः। मृते भर्त्तर्य्यपुत्रायाः पतिपक्षः प्रभुः स्त्रियाः। विनियोगात्मरक्षासु भरणे च स ईश्वरः॥ परिक्षीणे पतिकुले निर्मनुष्ये निराश्रये। तत्सपिण्डेषु चासत्सु पितृपक्षः प्रभुः स्त्रियाः॥ विनियोगे दानादौ पतिपुत्राभावे भर्तृकुलपरतन्त्रता तस्याः। एवञ्च दुहितुरप्यधिकारे जाते तस्यां मृतायान्तदभावोक्ताः पितृधनाधिकारिणोगृह्णीयुः। नतु दुहितृधनाधिकारिणः॥०॥

उपभोगोऽपीति। एवञ्च भर्त्तुरुपकारस्यापेक्षणीयत्वेन। और्द्धदेहिकक्रियार्थं पारलौकिकोपकारार्थम्। विनियोगे दानादाविति। एवञ्च तद्धनदाने पतिपक्षपरतन्त्रता यदि तदा स्पष्टमेव तदनुमत्या कदाचित्पितृपक्षेभ्योऽपि दानमिति। एवञ्चेति। दुहितृतोऽभ्यर्हितायाः पत्न्या एव भोगावशिष्टधने यद्यनन्तराधिकारिणामधिकारस्तदा सुतरान्दुहितृनन्तरन्तदभावे वाऽनन्तराधिकारिणामधिकार इति भावः। पितृधनाधिकारिणः स्वपुत्रपितामहादयः। दुहितृधनाधिकारिणस्तद्दुहित्रभावे दौहित्रादय.॥०॥

पत्न्या च भर्त्तृधनात्कन्यायै विवाहार्थं तुरीयांशो देयः। पुत्राणामेव तद्दानप्रतिपादनाद्दण्डापपायितं पत्न्यादीनान्दानमिति पत्न्यधिकारः॥०॥

॥ पत्न्यभावे दुहितुरधिकारः॥

तत्र मनुनारदौ। यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा। तस्यामात्मनि जीवन्त्यां कथमन्यो हरेद्धनम्॥ दुहितरं विशिनष्टि।

नारदः। पुत्राभावे च दुहिता तुल्यसन्तानदर्शनात्। पुत्रश्च दुहिता चोभे पितुः सन्तानकारिके॥ दुहितुरधिकारे सन्तानदर्शनं हेतुतया

निगदितम्। सन्तानश्च पिण्डदोऽभिमतः। अपि पिण्डदस्यानुपकारकत्वेनान्यसन्तानादसन्तानाच्च विशेषात् दौहित्रस्य नतिपिण्डदाता नच तत्पुत्रः। नापि दौहित्री * तत्पर्य्यन्तेन पिण्डविच्छेदात्। अतः पुत्रवती सम्भावितपुत्रा चाधिकारिणी। विधवात्वबन्ध्यात्वदुहितृप्रसूत्वादिना विपर्य्यस्तपुत्रा पुनरनधिकारिण्येवेति दीक्षितमतमादरणीयम्। तत्र प्रथमं कन्यैवैका पितृधनहारिणी।

* यथा पराशरः ॥ अपुत्रस्य मृतस्य कुमारी रिक्थं गृह्णीयात्तदभावे चोढा। ऊढापदमपूर्वोक्त विशेषपरम् ॥

---

* यथा पराशरः ॥ अपुत्रस्य मृतस्य कुमारी रिक्थं गृह्णीयात्। तदभावे चोढेतीति वचनमनाकरं व्यवहारमाधवे कमपि व्यवहारं पराशरेण व्युत्पादितवानिति माधवाचार्य्य लिखनात् पराशरस्मृतावदर्शनाच्च पाठस्तु प्रामादिक इति श्रीलक्ष्मीनारायणशर्म्मणा द्योतितं परन्तु एतद्देशे एतद्वचनानुसारिव्यवहारस्य प्रचरद्रूपत्वात् युक्तिमूलकत्वद्व्यवहारादेव चैषा व्यवस्था आदरणीया ॥ ० ॥

तथा देवलः । कन्याभ्यश्च पितुर्द्रव्याद्देयं वैवाहिकं वसु । अपुत्रिकस्य कन्या स्वा धर्म्मजा पुत्रवद्भवेत् ॥ पुत्रिकापदमपुत्रोपलक्षणम् । स्वा सवर्णा । धर्म्मजा औरसी । युक्तञ्चैतत् धनमन्तरेणापरिणीतायाः कन्यायाऋतुदर्शने पित्रादीनां नरकपातश्रुतेः ॥०॥

इच्छापूपायितमिति । यथा इच्छापकर्षे तत्सम्बन्धस्यापूपस्याप्यपकर्षः तथा पुत्रसंक्रान्तधनस्य पत्नीगततयापकर्षे तत्सम्बन्धस्य कन्याधनावशिष्टत्वविशेषणस्यापकर्ष इतिभावः । इतिपत्न्यधिकारः ॥०॥ दुहितुरधिकारो निरूप्यते इतिशेषः विशिनष्टि सन्तानवत्तयाधिकारित्वेन । अन्यसन्तानादिति । अन्यस्य सन्तानो यथा न पिण्डदस्तथाऽयमपीत्यविशेषः । अथ स्नानाद्दृष्टादेः । तत्पुत्रो दौहित्रपुत्रः । विपर्य्यस्तपुत्रापुत्रविपरीतापत्या । उन्मादादिदोषग्रस्तपुत्रा इति केचित् । तदसत् दुहितृप्रसूत्वादिनेति हेत्वनुपपत्तेः । कन्यैवेति । न तु दत्तया सहेत्यर्थः । पर्व्वांकविशेषोऽविपर्य्यस्तपुत्रत्वम् ॥०॥

तदाह । विष्णुः । यावन्तु कन्यामृतवः स्पृशन्ति तुल्यैः सकामामपि याच्यमानाम् । तावन्ति भूतानि हतानि ताभ्यां मातापितृभ्यामिति धर्म्मवादः ॥

तथा पैठीनसिः । यावन्नोद्भिद्येते स्तनौ तावदेव देया अथ ऋतुमती भवति तदा दाता प्रतिग्रहीता च नरकमाप्नोति पितृपितामहप्रपितामहाश्च विष्ठायां जायन्ते तस्मान्नग्निका दातव्या ॥ तस्माद्विवाहोपयुक्तत्वेन पित्रादीनां नरकनिस्तारकत्वात् । परिणीतायाश्च पुत्रद्वारेणाप्युपकारकत्वात् । तदर्थन्धनं स्वाम्यर्थमेव भवतीति पत्न्यभावे न्याय्यङ्कन्यास्वत्वम् । कन्यायास्त्वभावे सम्भावितपुत्रायाः पुत्रवत्याश्चाधिकारः ।

तदाह बृहस्पतिः । सदृशी सदृशेनोढा साध्वी शुश्रूषणे रता । कृताकृता वा पुत्रस्य पितुर्धनहरी तु सा ॥ सदृशी पितृसवर्णा । सदृशेनोढेति उत्तमाधमवर्णपरिणयननिरासार्थम् । उत्तमाधमपरिणीतदुहितृजातस्योर्ध्वमोत्तमवर्णमातामहादिश्राद्धनिषेधात् । सवर्णेनोढायास्तु पुत्रद्वारेण पित्रुपकारकत्वात् ॥ ० ॥

नग्निकाऽनागतर्त्तुका । नग्निकाऽनागतार्त्तवा इत्यमरकोषात् । परिणीताया अनन्तर विवाहितायाः पुत्रद्वारेणेति । ऊढाया एतदुपकाराविशेषेऽपि धनाभावेनापरिणीताया ऋतुमत्तया सम्भावितस्य भविष्यतो नरकस्य प्रतिकर्त्तृत्वमेव

कुमार्य्याः प्रथमं धनग्रहणे निमित्तमिति बोध्यम्। सदृशीति। तेनासवर्णायाः सदृशेनोढाया अपि न धनाधिकारित्वमित्युक्तम्। कृता पुत्रिका अकृता तदन्या। अपुत्रस्येति। अपत्नीकस्येत्यपि बोध्यम्। पत्न्यभावएव कन्याधिकारावगमात्। निषेधादिति। निषेधस्तस्मादेव विशेषणात्कल्पनीयइति। कृताकृता वेत्येकवचनेनोपात्तत्वात्पुत्रिकाया अपि पत्नीकुमार्य्योरनन्तराधिकारः स्यादित्याशङ्कामपनेतुमाह ॥०॥

पुत्रिकापुत्रस्य तु पुत्रवद्देवोपकारकत्वातिशयेन पुत्रिकायाः पुत्रतुल्यत्वात्। पुत्रिकौरसयोः समो धनाधिकारः। अपुत्रिकायास्तूढायाः पुत्रादिन्यूनोपकारकत्वपुत्रद्वारैवोपकारकत्वमिति। कन्यापर्य्यन्तानामभावएव धनाधिकारिता युक्ता। नच वाच्यम्। एवन्तर्हि पुत्रवत्याएव प्रथमाधिकारोऽस्तु तदभावे तु सम्भावितपुत्रायाइति। यतस्तस्याः पश्चादुत्पन्नस्य दौहित्रस्यानधिकारापत्तेः। नच तद्युक्तम्। दौहित्रतया द्वयोरप्युपकाराविशेषात्। भर्त्तृशुश्रूषापरत्वेनावैधव्यमदर्शयन् सम्भावितपुत्रतां प्रदर्शयति। सेतिच पूर्ववचनोपात्ता दुहिता परामृश्यते। तदेवं सदृशी सदृशेनोढा

इत्यादि विशेषणाच्च दुहितृमात्रतया पितृधना धिकारितेति दर्शयति।

अन्यथा। अङ्गादङ्गात्सम्भवति पुत्त्रवद्दुहिता नृणाम्। तस्याः पितृधनं त्वन्यः कथं गृह्णीत मानवः॥ इत्यनेन दुहितृत्रधिकारे कथिते सदृशीसदृशेनोढेत्यादिना तस्यैवाभिधानं पुनरुक्तं स्यात्। सामान्यप्राप्तेस्तु विशेषकथनमपुनरुक्तमेव। यत एव स्वपुत्त्रद्वारेण पिण्डदातृतया दुहितुः पितृधनाधिकारः। अत एव पुत्त्रिकाया अपि पित्रुपरमजातधनसम्बन्धायाः पश्चाद्वन्ध्यात्वेन तद्भर्त्तुर्वा प्रसवासामर्थ्येन विपर्य्यस्तपुत्त्रायामरणे तद्धनं न भर्त्तुः॥ ०॥

पुत्त्रिकापुत्त्रस्त्विति। अनेन द्वारगतोत्कर्ष उक्तः। स्वतोऽप्युत्कर्षमाह। पुत्त्रिकायाइति। तुल्यत्वञ्च पुत्त्रिकायां कृतायां त्वित्यनेन मनुना समविभागोक्तेरिति। पुत्त्रादित्यादिना पौत्त्रप्रपौत्त्रपरिग्रहः। एवञ्चर्हीति। यद्युपकार एव प्रयोजकस्त इत्यर्थः। यत इति। अत एव विधवासधवयोः पुत्त्रवत्योर्विधवाया एव प्राक्पुत्त्रद्वारेण पिण्डदातृत्वात् प्रथममधिकार इति निरस्तम्। भर्त्तृशुश्रूषायाः पित्रुपकारत्वाभावात्। धनग्रहणाप्रयोजकत्वमाशङ्क्याह। भर्त्तृशुश्रूषापरत्वेनेति।

पूर्व्ववचनेति । अङ्गादङ्गात्सम्भवतीत्यादिवचनोपात्तेत्यर्थः तस्यैव वृहस्पतेरेव । सामान्यप्राप्तेरिति । यद्यपि विशेषकत्वेऽपि सामान्यवचनवैयर्थ्यं तथापि सामान्यवचनाभावे कुमारीणामनूढात्वेनानधिकारप्रसक्त्या न वैयर्थ्यं ऊढायास्तु दुहितृत्व पुरस्कारेण सामान्यवचनादधिकारप्राप्त्या विशेषस्यापुनरुक्ततैवेति भावः तस्याः पितृधनं त्वन्यः कथमित्यनेनान्यावधारणार्थत्वेनावैयर्थ्यमिति केचित् ॥ ० ॥

यथा शङ्खलिखितौ । प्रेतायाः पुत्रिकायास्तु नभर्त्ता द्रव्यमर्हति । अपुत्रायाः ।

तथा पैठीनसिः प्रेतायां पुत्रिकायां तु न भर्त्ता द्रव्यमर्हति । अपुत्रायां कुमार्य्या वा स्वस्रा ग्राह्यमतदन्यया ॥ ततः कुमार्य्या स्वस्रा अन्यया वा सम्भावितपुत्रया स्वस्रा तद्धनं ग्राह्यम् । अतस्त्वधिकारे व्यावृत्तिरन्याधिकारस्य । यत्तु मनुवचनम् । अपुत्रायां मृतायां तु पुत्रिकायां कथञ्चन । धनन्तत्पुत्रिकाभर्त्ता हरेतैवाविचारयन् । तद्विपर्य्यस्तपुत्रायाउत्पन्नमृतपुत्रायाः पुत्रिकायामरणे वेदितव्यम् ॥ ० ॥

विपर्यस्तपुत्रया पुत्रोत्पत्त्यभाववद्यावज्जीवं पाल्यमिति ।
एतदपि पत्न्यभावे कुमार्यादीनामधिकारो बाध्यत्वादिति बोध्यम्
अन्तरिति । उक्तोभयवचनाभ्यां विपर्यस्तपुत्रापुत्रयोः पुत्रिक
योर्मरणे कुमार्यादीनामधिकारे प्राप्ते भर्त्तुरधिकारस्य
व्यावृत्तिरिति समयापसंहारः । प्राञ्चस्तु यतः पुत्रिकाया एव
विपर्यस्तपुत्राया मरणे भर्त्तुरधिकारस्य व्यावृत्तिरिति
व्याचक्रुः । न तत्संक्रान्तदाये भर्त्तुरधिकारोऽतः स्त्र्यधिकारे
ऽन्यासां दुहित्रादीनामप्यधिकारेऽनन्तरं विपर्यस्तपुत्राणा
न्तासां मरणे तदविपर्यस्तपुत्राया इति । एतस्यैव विवरणं
उत्पन्नमृतपुत्राया इति । अत्र पत्युरुपकाराभावाच्चकारः
क्वाचित्कः पाठः प्रामादिकः । अयात्र मनुलिखितादिवचन
मेव उत्पन्नमृतपुत्राविषयम् । मनुवचनन्त्वनुत्पन्नपुत्राविषय
मिति वैपरीत्यमेव न कुतः अनुत्पन्नपुत्राया इवाविपर्यस्त
पुत्राया अपि पित्रुपकाराभावेनाविशेषादिति चेन्न । अविपर्यस्त
पुत्रायाः पुत्रोत्पत्त्यैव पितुः पुन्नामनरकनिवर्त्तकत्वेन कृतो
पकारकतया स्वामित्वे निर्व्यूढे पितुरितरापेक्षया तस्या
एवाधिकोपकारकत्वादधिकारो युक्तः । अतएव दौहित्रस्य
मुखं दृष्ट्वा किमर्थमनुशोचसीत्यनेन दौहित्रमुखदर्शनस्यापि
नरकनिस्तारकत्वेति । पुत्रानुत्पत्तौ तु पित्रुपकाराभावात्त
स्या एव न स्वामित्वं कुतस्तत्पत्युरिति तत्पितृधनाधिकारिणां
कन्यादीनामेव तदानीं तत्राधिकारस्य न्याय्यत्वात् । यद्यपि

वन्ध्यात्वेनावधृतायां जीवन्त्यामप्येवमुचितन्तथापि प्रेतायाइति प्रेतपदग्रहणान्न जीवन्त्यां तस्यामन्यदुहित्रादीनामधिकार इति । परंतु नेदं वचनम्पुत्रिकापितृदायपरम् । किन्तु । तदीयश्वैदायिकादिधनाभ्वरादिविषयम् । पुत्रिकायाः पुत्रत्वेन तस्यास्तत्सुते पित्रधिकारप्रसक्तौ तदपवादकमित्याहुः । दौहित्राधिकारार्थमाह ॥ ० ॥

पिण्डदानमेव च द्वयोरेकं निमित्तमनुवदति बृहस्पतिः यथा पितृधने स्वाम्यं तस्याः सत्स्वपि बन्धुषु । तथैव तत्सुतोपीष्टे मातृमातामहे धने ॥ यथा येन दौहित्रदेयपिण्डेन दुहिता पितृधनाधिकारिणी । तथैव तेनैव पिण्डदानेन दुहितृसुतोपि मातामहधने स्वामी सत्स्वपि पित्रादिषु । नच पुत्रिकापुत्राभिप्रायेणेदं वचनम् कृताकृता वाऽपुत्रस्य पितुर्द्धनहरी तु सा । एतद्वचनोपात्त कृताऽकृतदुहित्रोरेव तस्याइति तत्सुतइति तत्पदेन परामर्षात् । प्रत्यासत्त्यतिरेकाद्वा । अकृता परामर्षएव युक्तोनतु तत्परित्यागः ॥

अतएव मनुः दौहित्रोह्यखिलं रिक्थमपुत्रस्य हरेत्पितुः । सएव दद्याद्वौ पिण्डौ पित्रे माता

मचाय च ॥ पौत्रदौहित्रयोर्लोके विशेषोनास्ति धर्मतः । तयोर्हि मातापितरौ सम्भूतौ तस्य देहतः ॥ मातामहदेहाद्दुहितुः सम्भवं दौहित्रस्य धनाधिकारे हेतुत्वेन निर्दिशति

पिण्डदानमेव चेति । चकारोयुक्त्यन्तरसमुच्चयाय । एवकारश्चोपकारस्य प्राधान्यार्थः । एतेन विपर्यस्तपुत्राया: पिण्डदानायोग्यायादुहितुः सुतरान्नाधिकार इत्यपि सूचितम् । यथेत्यस्य विवरणं येनेत्यादि । तथैवेत्यस्य विवरणं तेनैवेत्यादि । नच पुत्रिकापुत्रेति । तथाच दौहित्रसामान्याधिकारे नेदं वचनम् । किन्तु । पुत्रिकाधिकारएवेति भावः । एतेनोक्तवचनस्य पुत्रिकाविषयतया तस्याएवाधिकारे पिण्डदानोपकारस्य हेतुतया निर्देशात् । अपुत्रिकानां दुहितृत्वपुरस्कारेणैवाधिकारात् । तादृश्याविपर्य्यस्तपुत्रायाअपि धनाधिकारस्य निर्य्युक्तत्वात् । तदनन्तरमाद्भर्तुरेवाधिकारोन्याय्य इति पूर्व्वोक्तपूर्व्वपक्षोपि सूचितः । परामर्षादिति । एतद्वचनानन्तरमेवैतद्वचनस्य बृहस्पतिना अभिहितत्वादिति भावः । प्रत्यासत्त्येति । क्लृतापेक्षया अक्लृतायाः पश्चान्निर्दिष्टत्वेनापिमस्य इत्यनेन तस्याएवाव्यवधानातिरेकादित्यर्थः । अतएवेति । निर्दिशतीत्यग्रेणान्वयः ॥ ० ॥

न तु पुत्रिकाकरणम्। इतरथा तदेव निर्दिशेत् तथा व्यक्तमाह।

स एव । अकृता वा कृता वापि यं विन्देत्सदृशात्सुतम्। पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनं ॥ अकृताजातस्यापि दौहित्रस्याधिकारमभिदधाति। किञ्च। स्मृतिषु। दौहित्रपदमकृतपुत्रिकाजातपरं नियतम् ॥

यथा बौधायनः। अभ्युपगम्य दुहितरि जातम्पुत्रिकापुत्रमन्यन्दौहित्रं विद्यादित्यनुवर्त्तते । अत एव भोजदेवेनापि कृताकृतदुहित्रधिकारे वृद्धस्मृतिरित्यभिधाय । यथा पितृधने स्वाम्यमिति वचनं लिखितम् । तथा गोविन्दराजेनापि मनुटीकायाम् ॥

अपुत्रपौत्रे संसारे दौहित्राधनमाप्नुयुः ।
पूर्व्वेषान्तु स्वधाकारे पौत्रदौहित्रकाः समाः ॥

एतद्विष्णुवचनबलेन ऊढातः प्रागेव दौहित्रस्याधिकारो दर्शितः। सचास्मभ्यं न रोचते। सदृशो सदृशेनोढेत्यादिविरोधात् ॥ ० ॥

नतिति । एतेन एतद्वचनस्य पुत्रिकापुत्रविषयम् । किन्तु दौहित्रसामान्यविषयत्वं वचनस्य हेतुत्वेन निर्देशादित्यपि सिद्धं । न पौत्री मातामहस्तेन इत्यभिधानात् । अकृतापरमभिसन्धिकृतापरं अपुत्रिकापुत्रस्य मातामहपौत्रत्वानुपपत्तेः अभिसन्धिमात्रात्पुत्रिकेत्येकेषामिति गौतमदर्शनात् । अभिसन्धिमात्रेणापि पुत्रिकासम्भवात् । तथा चाकृता ऽवाकृतेत्यर्थात्तेन इ वचनमपुत्रिकापुत्रविषयमत आह । किञ्चेति । अन्यन्दौहित्रमिति । एतेनाकृतेति वचनस्यौचीत्यनुवादादस्तु पुत्रिकापुत्रपरम् । दौहित्रो ऽखिलं रिक्थमिति वचनन्तु दौहित्रपदश्रवणात् । अपुत्रिकापुत्रपरमेवेत्यकृतापुत्रस्याप्यधिकारः सिद्ध एवेति दर्शितम् । अभ्युपगम्य पुत्रिकात्वेन स्वीकृत्य । अत एवेति । यथा पितृधने स्वाम्यमिति वचनस्य कृताजातदौहित्रविषयत्वादेवेत्यर्थः । वृहस्पतिवाक्ये पात्रादिपदाभावादकृतापुत्रिकेत्यवार्थद्वयाश्रयेनाह । सदृशो सदृशेनेति । विरोधादिति । तेन पुत्राभाव एव दुहितुरधिकारस्य प्रतिपादनात् । सुतरामेव दौहित्रस्य तदनन्तरत्वादित्यर्थः ॥ ० ॥

किंतूढायाः प्रागुक्तरूपाया अभाव एव सत्स्वपि पित्रादिषु दौहित्रस्याधिकारः । तथैवेति दुहितृवद्भावविधानात् । तत्सुतोपीत्यूर्येतया च निर्देशात् ।

दौहित्रस्य जघन्यतावगतेः। अतोदुहित्रनन्तर न्दौहित्रस्याधिकारइति सिद्धम्। सत्त्वपिबन्धु ष्वित्यनेन पित्रोरधिकारः पत्न्यभावे न्याय्योपि दुहितृदौहित्राभ्याम्बाधितइति। बाधकाभावे पित्रोरधिकारः सूचितः।

अतएवानन्तरं बृहस्पतिः॥ तदभावे भ्रातरस्तु भ्रातृपुत्राः सनाभयः। सकुल्याबान्धवाः शिष्याः श्रोत्रियाधनहारकाः॥ तच्छब्देन दौहित्रस्य पित्रोः सूचितयोः परामर्षः। तेनामीषामभावे भ्रात्रादी नामधिकारः। यत्तु बालकवचनम्। पत्नी दुहि तरश्चैव पितरौ भ्रातरस्तथा। इत्यादिनियतक्रमा द्धस्तनएव दौहित्रस्याधिकारइति। तद्बृहस्पति विरोधाद्बालवचनमेव ॥१०॥

प्रागुक्तरूपायाविपर्य्यस्तपुत्रायाः दुहितृवद्भावविधानात्। तत्तुल्यत्वाभिधानात्। जघन्यतावगतेरित्यग्रेणान्वयः। अत्र हेतुः उपमेयस्य उपमानापेक्षयाह। नचैवेतीति। उत्कर्ष बोधस्य सार्व्वलौकिकत्वमिति हेत्वन्तरमाह॥ तद्युतोऽपीति। चकारोभिन्नक्रमेऽप्यर्थान्वितार्थबोधकतद्युतोऽपीति शब्दार्थ तया निर्द्दिष्टश्चेत्यर्थः। अतएवानन्तरमिति। यथा पितृधने

स्वाम्यमित्यनन्तरमित्यर्थः । तच्छन्देनेति । अन्यथा पित्रोरुपरमे दौहित्राभावएव भ्रातरस्तेषामित्यादिना याज्ञवल्क्यादिविरोधः स्यादिति भावः । अतएव दद्याद्वौ पिण्डाविति मनुवचनम्पुत्रिकापुत्रपरमेव पितृधनग्रहणपक्षे उभयपक्षपिण्डदानविधायकम्पितृधनाग्रहणे तु केवलमातामहपक्षस्यैव पिण्डदानमिति । अपुत्रिकापुत्ररूपदौहित्राधिकारस्तु पत्नी दुहितरश्चेत्यादिना निर्दिष्टाधिकारिणामनन्तरमेवेति वालकमतमनूद्य पाकर्त्तुमाह । यत्त्विति । स्वस्तिवचनेनेति । तथैव तत्सुतोऽपीष्टे मातृमातामहे धने इत्यनेनेत्यर्थः । वालवचनमिति । श्रियादिवानभिसन्धितनात्पर्य्यंवचनमित्यर्थः ॥ नन्वेवं याज्ञवल्क्याद्युक्तक्रमविरोधः तैर्दुहितृनन्तरन्दौहित्रस्यानिर्द्देशादतआह ॥०॥

ननु वहुवचनात्तदुहितृपदेनैव कन्या ऊढा दौहित्राणां निर्द्दिष्टत्वात् क्रमविरोधाभावात् । यथा स्वर्यातस्य ह्यपुत्रस्येति पुत्रपदम्पौत्रपर्य्यन्तपरम् पिण्डदत्वाविशेषात् तथा दौहित्रस्यापि पिण्डदत्वात्तत्पर्य्यन्तं दुहितृपदम् । यथावा *पुत्राभावे तु दुहिता तुल्यसन्तानदर्शनात् + इत्यत्र पुत्रपदम्पौत्रीपर्य्यन्तपरम् । अन्यथा दुहितरइति

बहुवचनमनर्थकं स्यात् पत्नी तत्सुत इत्यादिवदे कवचनमेव कुर्य्यात्। भ्रातर इत्यस्यापि बहुवचन स्यार्थवत्तां वक्ष्यामः॥ किञ्च पित्रादीनां रिक्थपर्य्या प्तानां क्रमनियमात् । राज्ञोऽभावे दौहित्र स्याधिकारो वाच्यः न च कदाचिद्राज्ञोऽभावे दौहि त्रस्याधिकार एवाभिहितो भवेत् । तस्माद्विश्वरूप जितेन्द्रियभोजदेवगोविन्दराजैर्दुहित्रभावे दौहि त्रस्याधिकारो निरूपित आदरणीयः। यदा च कन्या जाताधिकारा पश्चात् परिणीता सती म्रियते । तदा तद्धनं कन्याया अनुत्पन्नाधिकाराया अभावे येषामूढादीनां प्रतिपादितं उत्पन्नाधिकाराया अप्यभावे तेषामेव तद्धनम् । नतु तद्भर्त्रादीना भवति ॥

बहुवचनेति। दुहितुरूढाभेदेन द्वैविध्याद्बहुवचनान्यथा नुपपत्त्या तथैव तत्सुतोऽपीति वृहस्पतिना दौहित्रस्य दुहितृ धर्मातिदेशेन चाजहत्स्वार्थलक्षणया दुहितृपदस्य दुहितृ दौहित्रोभयपरत्वादिति भावः। बहुत्वतावच्छेदकन्तु अनूढो ढादौहित्रान्यतमत्वादिकमिति बोध्यम्। असगोत्रत्वे सति साक्षात्परम्परासाधारणपार्वणकर्तृत्वमिति केचित्। प्रपौत्र

पर्य्यन्तपरमिति। अत्र तज्ज्ञातावच्छेदकं धर्मोपलक्षं इति पार्थक्य कर्त्तृत्वं। यत्तमइति पंचत्ववचनव्याख्यावसरे इत्यर्थः। दुहितृपर्य्यन्त दौहित्रपर्य्यन्तपरत्वाभावे दोषमप्याह। किञ्चेति। दौहित्राधिकारस्थिरत्व कन्याधिकारे विशेषमाह। यदेति। केचित्तु पुत्रिकायाविपर्य्यन्तपुत्राया अभावे तत्पितृधनं न भर्त्तुः किन्तु पितृधनाधिकारिणामित्युक्तम्। अपुत्रिकायास्तत्पाले किं स्यादतआह। यदेति इत्याहुः। विषतइति। पुत्रमनु त्पाद्येत्यादि ॥०॥

तस्य स्त्रीधनविषयत्वात्। भुञ्जीता मरणात् क्षान्तेति वचनेन जाताधिकारायाः पत्न्या अभावे अनुत्पन्नाधिकारपत्न्यभावाक्रान्तानां पूर्व्वधनस्वामि दायग्राहिणां दुहित्रादीनान्धनाधिकारस्य दर्शितत्वात् १ पत्नीतोजघन्यदुहितृदौहित्रयोरधिकारे दण्डापूपन्यायसिद्धोऽयमर्थः । यद्वा पत्नीत्युपलक्षणम् ४ स्त्रीमात्राधिकारे अयमर्थोबोद्धव्यइति तात्पर्य्यमिति दुहितृदौहित्रयोरधिकारः ॥ दौहित्रस्याभावे पितुरधिकारोन मातुः ॥२०॥

तस्येति। भर्त्राद्यधिकारार्थकवचनस्येत्यर्थः। आदिना पितृमातृभ्रातृणां ग्रहणम्। उक्तार्थे युक्तिमाह। भुञ्जीतेति।

स्वधिकारे अधिकारसाधने। अयमर्थ इति। जाताधिकाराभावे अनन्तराधिकारिणामूढादीनामधिकार इत्येवंरूपोऽर्थ इत्यर्थः। ननु यावद्वचनं हि वाचनिकमितिन्यायात् पत्न्यधिकार एव अन्यथा तत्र पत्नीपदोपादानवैयर्थ्यापत्तिः। अतः पत्नीपदस्य स्त्रीमात्रपरत्वमाह। यद्वेति। पत्नीति भुञ्जीतानरस्त्वाम्नाता इत्यत्र पत्नीपदं स्त्रीमात्रोपलक्षकमित्यर्थः। ननु किमत्र स्त्रीमात्रोपलक्षकत्वे बीजमिति चेदत्रायं भावः। स्त्रीसंक्रान्तधनस्य स्त्रीधनत्वाभावादधिकारिविशेषस्यात्र वचनादप्राप्त्या वैयर्थ्यापत्तेः आकांक्षया कल्पने सादृश्यात् स्त्रीसंक्रान्तधनमात्रस्य पूर्व्वस्वामिदायादरूपोऽधिकारी कल्पनीय इत्येतदर्थम्पत्नीपदस्य स्त्रीलक्षकत्वमिति। अथैवं। पत्नीतोऽभ्यर्हितायाः पुत्रिकायास्तथा दर्शनात् पुत्रिकौरसयोः साम्यात्। पुत्रादिरहितस्य औरसस्यानन्तरं तद्धनन्तत्पत्न्या न स्यात्। स्याच्च दायादानां दुहित्रादीनामिति चेन्नैवम्। पुत्रस्य जन्मनैव कृतोपकारतया तत्र तस्य स्वामित्वे निर्व्यूढे तदनन्तरन्तदुत्तराधिकारिणान्तत्पत्न्यादीनान्तत्राधिकारस्य न्याय्यत्वात्। विपर्य्यस्तपुत्राचारास्तु पुत्रिकायास्तदुपकारस्याभावात्। तदधिकारस्यैव निर्व्यूढतया तदनन्तरन्दायादाधिकारस्यैव न्याय्यत्वादिति॥ दौहित्राधिकारन्निरूप्य तदनन्तरम्पितुरधिकारमाह॥ दौहित्रस्याभाव इति॥ न त्वात्

रिति। पितुः पूर्व्वमिति शेषः। याज्ञवल्क्यवचनेऽपि पितराविति द्वन्द्वनिर्द्देशात् यौगपद्याधिकारमाशंक्याह ॥०॥

नापि युगपन्मातापित्रोः + तदभावे पितृगामि तदभावे मातृगामीति विष्णुवचनविरोधात्। यत्तु मनुवचनम्। अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्। मातर्य्यपि च वृत्तायां पितुर्माता हरेद्धनम्। यच्च बृहस्पतिवचनम्। भार्य्यासुतविहीनस्य तनयस्य मृतस्य च। माता रिक्थहरी ज्ञेया भ्राता वा तदनुज्ञया। तत्पितृपर्य्यन्ताभावे बोद्धव्यम्। न्यायागतञ्चैतत्। दौहित्रात्परतो मातुः पूर्व्वम्पितुरधिकार इति मृतपिण्डमृतभोग्यान्यपिण्डद्वयदातुर्द्दौहित्रान्मृतभोग्यान्यपिण्डद्वयमात्रदातृतया पितुर्जघन्यत्वात्। मात्रादिभ्यस्तु मृतभोग्यान्यपिण्डद्वयदातृतया बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते इति मनुवचनावगतोत्कर्षेण च बलवत्त्वात्। पितराविति च पितृक्रम एवावगम्यते। तथाहि पितृपदात्प्रातिपदिकात्प्रथमम्पितुरवगतेः पश्चाद्द्विवचनवशेनैकशेषकल्पनया मातुरवगमात् ॥०॥

नापि युगपदिति। तदभावइति। एतेन तदभावे मातृ
गामि तदभावे पितृगामीति रत्नाकरादिभिर्लिखितपाठो
वक्ष्यमाणविरोधाद्भ्रमपरिजृम्भित एवेति ध्वनितम्। तत्पितृ
पर्य्यन्ताभावइति वक्ष्यमाणन्यायोपलब्धविष्णुवचनेन मनु
वचने अपत्यपदस्य पुत्र्यादेर्बृहस्पतिवचने च भार्य्यापुत्र
पदयोः पौत्रादिरूपलक्षकत्वस्यावश्यकत्वात्। पितुरुपलक्ष
कत्वस्यापि युक्तत्वादिति भावः। न्यायमाह। न्याय्यगतेत्यादि।
दौहित्रात्परतोऽधिकारे हेतुमाह। मृतपिण्डेति। मातृतः
पूर्व्वमधिकारहेतुमाह। मात्रादिभ्यइति। युगपदधिकारा
भावे हेतुमाह। पितरावित्यत्रेति। पितृक्रम एवेति। पितुः
प्राक् प्रतिपादितत्वादिति भावः। प्राक् प्रतिपत्तिं दर्शयति।
तथाहीति। तथाच पितराविति पितृक्रमाभिधानपरमेव
तत्प्रापकन्तु क्रमन्यायोपबृंहितविष्णुवचनमेवातोऽत्र द्विवचना
वगतसाहित्यमभिधानक्रियापेक्षयैव गर्गा भोज्यन्तामिति
वदिति भावः। केचित्तु पितरावित्यत्र युगपदेव पित्रोरन्वय
बोधस्तथाच क्रमिकान्वयबोधस्य क्रमिकपदार्थस्मरणव्यापक
तया प्रकृते व्यापकस्य क्रमिकान्वयबोधस्याभावे व्याप्यस्य
क्रमिकपदार्थस्मरणस्याप्यभावात्। युगपदेव द्वयोरुपस्थित्या
युगपदेवाधिकारः पित्रोरितिवदन्ति। तन्मतं दूषयति॥०॥

अतः क्रमज्ञानं क्रमाभिधानव्याप्तम्। तन्निवर्त्तमानं क्रमज्ञानं निवर्त्तयतीत्यनुमानमदप्रमाणम्। व्यापकनिवृत्तेरसिद्धत्वात् विष्णुवचनविरोधाच्च ज्ञेयम्॥ इति पितुरधिकारः ॥०॥

पितुरभावे मातुरधिकारः । पितुरधिकारानन्तरन्तदभावे मातृगामीति विष्णुश्रुतेः । युक्तञ्चैतत् । गर्भधारणपोषणात्कृतोपकारत्वेनया तन्निष्क्रयस्यावश्यकर्त्तव्यत्वात्, पुत्रभोग्यान्यपिण्डदजननेनाप्युपकारकत्वाच्च भ्रात्रादिभ्यः पूर्व्वमधिकारस्य न्याय्यत्वात् । अतः पितृतो गौरवातिरेकश्रुतेर्मातुरधिकारः पितृतः पूर्व्वमिति ज्ञेयम् । गौरवातिरेकस्य धनसम्बन्धहेतुत्वे।

उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पितेति पितृतः पूर्व्वमाचार्य्यस्याधिकारापत्तेः, कनिष्ठे च भ्रातरि भ्रातृसुतेवासत्यपि पितृव्यादीनामधिकारापत्तेश्च ॥०॥

अतइति । उक्तक्रमेण क्रमिकोपस्थितेरावश्यकत्वात् इत्यर्थः । क्रमज्ञानं क्रमिकपदार्थस्मरणं । क्रमिकाभिधानं क्रमिकान्वयबोधसङ्घातमित्यर्थः । तत् क्रमिकाभिधानं ।

इत्यनुमानमिति। इति व्याप्तेस्तोर्वदनुमानं व्याप्याभावसाधने व्यापकाभावरूपं लिङ्गं। तदप्रमाणं अर्थासाधकम्। अर्था साधने स्वरूपासिद्धिरित्याह। व्यापकनिवृत्तेरिति। तथा तयोरन्वयबोधः क्रमेणैवेति भावः। ननु द्वन्द्वस्थले साहित्येन युगपदन्वयबोधो नतु क्रमिकस्तथाच कथं व्यापकनिवृत्तेर सिद्धत्वमित्यत आह। विष्णुवचनेति। तथाचान्वयबोधस्य यौगपदिकत्वेऽपि नाधिकारो यौगपदिकः। विष्णुविरोधात् किन्तु क्रमिक एव यथा पत्नीदुहितरश्चैवेत्यत्र सर्व्वत्र दुहितृ णामेकान्वयबोधविषयत्वेऽपि वचनान्तरबलात्कुमार्य्यादि क्रमेणाधिकार इति भावः॥ पितुरनन्तरमातुरधिकारमाह॥ पितुरिति॥ अस्य न्यायमूलत्वमाह। युक्तञ्चैतदिति। भ्राता दिभ्यः पूर्व्वमिति। यद्यपि भ्रातापि तद्भोग्यान्यपिण्डदस्त थापि गर्भधारणाद्युपकारकत्वेन भ्रातुर्मातृसम्बन्धाधीन त्वाच्चैनच प्रथमं मातुरेवाधिकार इति। गौरवातिरेकेति बहवस्तु पितुर्माता गौरवेणातिरिच्यते इत्यादिनेत्यर्थः॥०॥

अतः पितृतः परत एव मातुरधिकार इति। एवञ्च मृतस्य पितृसन्तानात्पूर्व्वं पितुश्च परतोमातुर धिकार इति वदता पितामहसन्तानात्पूर्व्वम्पिता महाश्च परतः पितामह्याधनाधिकारः सूचितः। अन्यथा पितरौ भ्रातरस्तथेति क्रमविरोधः स्यात्।

अतएव मनुः। मातर्य्यपि च वृत्तायां पितुर्माता हरेद्धनम्। सन्तानायां वृत्तायामित्यर्थः। अपि शब्दचकारयोश्चोभयत्रान्वयः कार्य्यः। तेन मातरि च वृत्तायां पितामह्यपि गृह्णीयात्। किम्पुन र्भ्रात्रादयः पितामहपर्य्यन्ता इत्यपिशब्दसूचिता भ्रात्रादयः। तदयं वचनार्थः। दौहित्रान्तात्मज सन्तानात्परतः स्वसन्तानाच्च पूर्व्वमुक्तक्रमेण पित्रोरधिकारः। अतः स्वसन्तानात्पूर्व्वं पितामह पितामह्योरधिकारोऽनेन दर्शितः। अतएव याज्ञवल्क्येन मातुरधिकारप्रदर्शनेनैव पितृव्यादिभ्यः पूर्व्वं पितामहपितामह्योरधिकारस्याप्युक्तत्वात् न पृथगुक्तः॥ इति मातुरधिकारः॥ ०॥

उपसंहरति। अतइति। पितृतः परतइति। भ्रात्रादिभ्यः पूर्वमित्यपि बोध्यम्। पितृसन्तानात् भ्रात्रादेः। पितामह सन्तानात्पितृव्यादेः। अन्यथेति। उक्तक्रमेणाधिकारकल्पने इत्यर्थः। क्रमविरोधादिति। ननु वाचनिकएव पितरौ भ्रात रस्तथा इतिक्रमः स च पितामह्याः कल्पनां विना कथमनुपपन्नः। नैवम्। मातुः परम्परया पिण्डत्रयस्य धनिभोग्यस्य दानेऽपि साक्षात् तत्पिण्डत्रयदातृतया श्रेष्ठात् भ्रातृतः

पूर्व्वमधिकारो गर्भधारणाद्युपकारकत्वादेव मुनिभिरुक्तः । एवम्पितामह्या अप्यधिकारोपि यदि स्यात् तद्भोग्यपिण्डद दातुः पितृव्यादन्यदाता तादृशपिण्डदाया: पितामह्याधनि पितृजननेन पितृव्यधनसम्बन्धमूलतया साधिकोपकारकत्वेन पितृव्यं बाधित्वा धनाधिकारो न भवेत्तदोक्तरूपस्याप्रयोज कत्वान्मातृभ्रात्रोः क्रमाभिधानं मुनीनां नस्यादिति भावः । केचित्तु पितामहीपितृव्ययोः पौर्व्वापर्य्यं केनापि नोक्तमतः कल्प्यन्तथा चान्यथा कल्पने मातृभ्रातृस्थलोक्तस्य उपकारा धीनाधिकारक्रमस्य विरोधादित्याहुः । अपिशब्दसूचिता इति । व्याख्यानवाक्यस्थाऽपिशब्दसमुच्चितार्थः । एतच्च पितरौ भ्रातरस्तथा इतिमातृगामीत्यभिधाय तदभावे भ्रातृगामीत्याद्येकश्रुतिमूलत्वादुक्तम् ॥ ० ॥

मातुरभावे भ्रातुर्धनम् ॥ मातृगामीत्यभिधाय तदभावे भ्रातृगामीति विष्णुवचनात् । तदिति मातुः परामर्शः । पितरौ भ्रातरस्तथेत्यत्रापि पित्रोर भावे भ्रातुरधिकारावगतेः । नच भ्रातरस्तथा तत्सुतइति यथाभ्रातरोधिकृतास्तथा भ्रातृपुत्रो ऽपि मातुरनन्तरमधिकारी स्यादिति वाच्यम् । भ्रातृ गामीत्यभिधाय तदभावे भ्रातृपुत्रगामीति विष्णु

विरोधात् तदिति भ्रातुः परामर्शः। न्याय्यं चैतत् मृतधनिभोग्यपित्रादित्रयपिण्डदानेन भ्रातुरुपकारकत्वात्। तथा तद्देयमानामत्रादिपिण्डत्रयदानेन तत्स्थानपाताच्च। अनेवं रूपात् भ्रातृपुत्रादन्तवत्वान्मातृमूलत्वाच्च भ्रातुरेवंरूपस्य माततोऽजघन्यतेति मातृतः परत एवाधिकारो युक्तः। किञ्च। तथा पदं भ्रात्रैव कुतोन सम्बध्यते। तेन यथा पितरौ भ्रातरोपि तथेति पित्रोर्भ्रातृणाञ्च तुल्योऽधिकारः स्यात्। तस्मात् विष्णुवचनविरोधे नैवायमप्यर्थ्यनुयोगः परिहर्त्तव्यः। सचान्यत्रापि समानः।

तथाच मनुः। पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा। भ्रातर एव हरेयुर्नतु भ्रातृपुत्रोधिकारीत्याह। किन्तु जीवत्पितृकस्यापि भ्रातृपुत्रस्य किमधिकारोनेष्यते। नचात्रान्योहेतुः। जीवत्पितृकस्य पिण्डदत्वाभावेनानुपकारकत्वादित्यतः। एवञ्चेन्मृतपितृकस्यापि भ्रातृतुल्योपकारकत्वात् कथन्तुल्यवदधिकारिता॥ ७॥

मातुरनन्तरं भ्रातुरधिकारन्निरूपयति। मातुरभावइति। तथा भ्रातृपुत्रोऽपीति। तथा च भ्रातृतत्पुत्रयोर्युगपदधिकारः स्यादिति भावः। तत्स्थानपातादिति । धनिकार्य्यकारित्वेन धनिस्थानपातादित्यर्थः। अनेवंरूपादिति । स्वतभोग्यपिण्ड त्रयदातृभिन्नत्वादित्यर्थः । नन्वेवं भ्रातुर्बलवत्त्वात् मातृतः प्रागधिकारः स्यात् अतआह। मातृमूलत्वाच्चेति। अथोप कारकत्वेऽपि भ्रातरस्तथा तत्सुतइत्यनन्यथासिद्धवचन बलात् युगपदधिकारोस्त्वित्यतआह। किञ्चेति। अन्यथापि भ्रातृपुत्रयोरधिकारेऽपि। एवञ्चेदिति। उपकारक्रमेणैवाधि कारादुपकारतारतम्येन क्रमइतिस्थितं चेदित्यर्थः॥ ०॥

अतएव देवलेन ततोदायमपुत्रस्य विभजेरन् सहोदराः। तुल्यादुहितरोवापि ध्रियमाणः पितापिवा॥ सवर्णाभ्रातरोमाता भार्य्याचेति यथा क्रमम्। इत्यनेन भार्य्यासवर्णदुहितृपितृमातृस होदरभ्रातृसापत्नभ्रातृपर्य्यन्ताधिकारिशृङ्खलायां भ्रातृपुत्रस्याकीर्त्तनात्सापत्नभ्रातृपर्य्यन्ताभावएव भ्रातृपुत्राणामधिकारः कथितः यच्च सर्वे ते तेन पुत्रेणेति तत् पुत्रत्वस्मरणन्तत्पिण्डदानार्थम्। भ्रात्रभावे च धनाधिकारार्थम्पूर्व्वोक्तवचनविरो

षात् अन्यथा भ्रातृतः पूर्व्वमेव क्रमेण स्यात् तस्मात् भ्रातुरेव प्रथममधिकारः। तत्रापि प्रथमं सोदरस्यैव तदुक्तम्। सोदरस्य तु सोदरः। भ्रातरस्तथेत्युक्ते भ्रातुरधिकारावसरे। प्रथमं सोदरो गृह्णीयादित्यर्थः तस्य त्वभावे सापत्नोभ्राता। एकप्रभवत्वेन तस्यापि भ्रातृशब्दार्थत्वात्॥०॥

अतएव भ्रात्रनन्तरं भ्रातृपुत्रस्याधिकारादेव। पूर्व्वोक्तेति। तदभावे भ्रातृपुत्रगामीति विष्णुवचनेत्यर्थः। अन्यथा पुत्रत्वातिदेशवत्त्वेनैवाधिकारे। स्यादिति अधिकार इति शेषः। भ्रात्रधिकारे विशेषमाह। तत्रापीति। प्रथमं सोदरस्याधिकारे प्रमाणमाह। तदुक्तमिति। भ्रातरस्तथेत्युक्ते इति। तथाच तद्वाक्येनैव सोदरासोदरभ्रातृसामान्यस्याधिकारसिद्धौ सोदरस्यानु सोदर इति यत्पुनरभिधानन्तत्सोदरक्रमेणाधिकारार्थमेवान्यथा वैयर्थ्यं स्यादिति भावः। ननु एकमातापितृजन्यपुत्रमेव भ्रातृपदशक्यतावच्छेदकमतश्च सोदर एव भ्रातृपदवाच्यः। वैमात्रेयादौ च पूर्व्वपुरुषसमानत्वेन रूपेण गौण एव भ्रातृपदप्रयोगः। एवञ्च। सति सोदराभावे भ्रातृपुत्रस्यैवाधिकारो युक्तः। तदभावे भ्रातृपुत्रगामीति विष्णुवचनात्। तत्कथं सोदरात्परतः सापत्नभ्रातुरधिकारं ब्रूषे

इत्यपाह। एकप्रभवत्वेनेति। तथाच मातापितृमात्रविशेषेण एकशरीरजन्यपुंस्त्वमेव भ्रातृपदशक्यतावच्छेदकं लाघवादिति भावः। वैमात्रेयस्य भ्रातृपदवाच्यत्वे मुनेः स्वरसमाह ॥०॥

तथाच। संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः दद्याच्चापहरेदंशं जातस्य च मृतस्य च॥ इदमपि याज्ञवल्क्यवचनम् ५ सोदरासोदरयोर्भ्रातृशब्दार्थत्वं दर्शयति। अन्यथा सोदरमात्रस्य तदर्थत्वे सोदरस्य तु सोदर इति न पुनर्विशेषणीयमिति। भ्रातृशब्दादेव सोदरावगतेः। तस्मात् पितरौ भ्रातर इत्यनेन सोदरासोदरयोरेवाधिकारो दर्शितः। सोदरवचनेन तु सोदरस्य प्रथममधिकारः। सापत्नस्य च सोदरान्मृतदेयषाट्पौरुषिकपिण्डदातुर्मृतभोग्यमात्रपित्रादिपिण्डत्रयदातृतया जघन्यत्वात् भ्रातृपुत्राच्च मृतभोग्यपिण्डद्वयदातुर्मृतभोग्यपिण्डत्रयदातृतया उपकारकत्वातिरेकेण बलवत्त्वात् मध्य एवाधिकारः श्रीकरविश्वरूपोक्त एवादरणीयः। तत्र किं संसृष्टिनोप्यसोदरस्य सोदराज्जघन्यत्वं नवेत्यपेक्षायामाह।

याज्ञवल्क्यः। अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यो धनं हरेत् असंसृष्ट्यपि चादद्यात् संसृष्टो नान्यमातृजः ॥ अस्यार्थः। संसृष्टी पुनरन्योदर्य्यः प्रथमं हरेत्। नपुनरन्योदर्य्यमात्रः प्रथमस्य हरन् सोदरं बाधित्वैव वा तेन सह वेत्यपेक्षायामुत्तरार्द्धम्। असंसृष्ट्यपि सोदरो गृह्णीयात्। सोदरपदमनुवर्त्तते॥ ०॥

तथा चेति। संसृष्टिन इति। संसृष्टिनो जातस्य संसृष्टिनोत्पन्नस्य पुत्रस्यापरः संसृष्टी दद्यात्। मृतस्य संसृष्टिनोऽंशं हरेदित्यर्थः। इदमपीति। अपिना प्रागुक्तलाघवतर्कः समुच्चीयते क्रमाधिकारे युक्तिमप्याह। सापत्नस्य चेति। मध्य इति। सोदरभ्रातृपुत्रयोरनन्तर इत्यर्थः। सोदरादिति। संसृष्ट संसृष्टिसाधारणोक्तिः। अनन्यत्वमिति। सोदरस्य तु सोदर इत्यनेन सोदरस्यैवाधिकारप्रतिपादनादिति भावः। नवेति। एतद्वचनस्यासोदरेण संसृष्टिना सोदरतुल्याधिकारपरत्वेऽनन्यत्वकोटिः। नान्योदर्य्य इत्यस्यार्थमाह। नपुनरिति। अन्योदर्य्यमात्र इति। संसृष्टासंसृष्टिसाधारण इत्यर्थः। प्रथममसंसृष्टिवैमात्रेयात्। सोदरपदमिति। सोदरस्य तु सोदर इति पूर्ववचनस्थसोदरपदमित्यर्थः॥ ०॥

नान्यमातृज एव संसृष्टी गृह्णीयात्। संसृष्टपदमेव वा सोदरमभिधत्ते। अतएव वृहस्पतिव्यवचनम्। सोदरेणान्यमातृजइति जितेन्द्रियेण लिखितम्। तथाच पूर्व्वार्द्धस्य संसृष्टीत्यनुवर्त्तते। तेन न केवलमन्योदर्य्यएव संसृष्टी गृह्णीयात्। किन्त्वसंसृष्टापि सोदरो गृह्णीयादित्यर्थः। तेनासंसृष्टिना सोदरेण संसृष्टिना चासोदरेण विभज्य ग्रहीतव्यम्। अतएवापिचशब्दं प्रयुक्तवान्॥ ०॥

नान्यमातृजइति। तथाच पूर्व्वापरविरोधभयादेव कारोऽध्याहार्य्यइति भावः। अनुपक्लृप्तकल्पने गौरवादाह। संसृष्टपदमेव वेति। अभिधत्तेइति। गर्भसंसृष्टार्थकत्वादिति भावः। अतएव संसृष्टवद्दस्य सोदरार्थकत्वादेव। पूर्व्वार्द्धस्येति। तथाचान्यमातृजः संसृष्टः केवलोन गृह्णीयादित्युत्तरार्द्धार्थः। निर्गलितार्थमाह। तेनेति। अपिचशब्दमिति। तयोः समुच्चयार्थकत्वादितिभावः। अत्रेदं चिन्त्यते संसृष्टसोदरासंसृष्टिसोदराभ्यां विभज्य ग्रहणं नयुक्तिवचनप्राचीनस्वरससिद्धम्। तथाहि संसृष्टित्वं विनिगमकान्तराभावविनिगमकम्। अन्यथा पितृव्ये संसृष्टिनि असंसृष्टिनोवैमात्रे

पक्षाधिकारेण स्यात्। न चैतद्वचनं अपचाधिकारमात्र
विषयं सामान्ये बाधकाभावात्। पितृव्यादिसंसर्गविषय
कत्वस्य वक्ष्यमाणत्वात्। वचनस्यायमेकदेशस्था व्याख्याने
च दद्यादिति क्रियानुषङ्गः नान्योदर्यधनं त्वस्य वैयर्थ्यं नाथ
पदाध्याहारश्चेति दूषणानि प्राचीनाय श्रीकरादयो युगप
द्विभागकल्पयोर्निर्विरुद्धत्वमिति । तस्मादवचनस्यायमर्थः ।
अन्योदर्यः संसृष्टी चेत्तदा तस्य मृतस्य धनं सोदरेतरः
संसृष्टी अन्योदर्योऽपि हरेत्। तदा कीदृशीत्यादित्याह ।
असंसृष्ट्यपीति । अपिना संसृष्ट्यसंसृष्टी वा सोदर एव गृह्णी
यात् इत्यर्थः। अन्योदर्यस्याहरणे हेतुमाह । नान्यमातृज
इति । अन्यमातृजत्वेन षट्पुरुषपिण्डदातुः सोदराज्जघ
न्यत्वप्रतिपादनात् यतोऽन्यमातृजोऽतो न गृह्णीयादित्यर्थः
इत्यस्य व्याख्याने संसृष्टसोदरासंसृष्टिसोदरयोस्तुल्यवद्भा
गोऽयुक्त एवेति सुधीभिर्भाव्यम्। अथ श्रीकरमतं दूषयितु
मुत्थापयति ॥ ० ॥

यत्तु श्रीकरमिश्रैरुक्तम् संसृष्टिनस्तु संसृष्टीति
त्यस्यासोदरसंसृष्टिमात्रविषयत्वे अन्यानपेक्ष
त्वात्। सोदरस्य तु सोदरइत्यस्याप्यसंसृष्टसोदर
मात्रविषयत्वे नैरपेक्ष्यात्। असोदरे संसृष्टिनि

सोदरे चासंसृष्टिनि उभयोः प्राप्तौ यदि इयमेव प्रवर्त्तेत तदान्योन्यसापेक्षमुभयोर्विधायकत्वम्भवेत्। नचैकस्य सापेक्षन्निरपेक्षञ्च विधायकत्वमुचितम्। विधिवैषम्यप्रसङ्गात्। यथा दर्शितम् ॥ ० ॥

यथेति। असोदरसंसृष्टिमात्रेति। असोदरः संसृष्टी केवलो यत्र तद्विषयत्वे तस्मिन्विषये तस्याधिकारबोधकत्वे इत्यर्थः अत्र केवलेनेत्यनेन सोदरसत्त्वव्यवच्छेदः अन्यानपेक्षत्वात्। विध्यन्तरानपेक्षप्रवृत्तत्वात्। विध्यन्तराविषयत्वादिति यावत्। सोदरमात्रेति। सोदरः केवलो यत्र तद्विषयत्वे तस्मिन्विषये तस्याधिकारबोधकत्वे इत्यर्थः। अत्र केवलेत्यनेना सोदरसंसृष्टिव्यवच्छेदः। निरपेक्षत्वादिति। पूर्व्वोक्तार्थकं उभयोस्तथाविधयोः सोदरासोदरयोः प्राप्तौ प्राप्तिनिमित्तम्। इयमेवेति। संसृष्टिनस्तु संसृष्टीति सोदरस्य तु सोदर इति च विधिद्वयमित्यर्थः। अन्योन्येति। संसृष्टिनस्तु संसृष्टीत्येतत्सापेक्षं सोदरस्य तु सोदर इत्यस्य विधायकत्वं सोदरस्य तु सोदर इत्येतत्सापेक्षञ्च संसृष्टिनस्त्वित्यस्य विधायकत्वमित्यर्थः निरपेक्षञ्चेति। अस्य विषयः प्रागेव दर्शितः। विधिवैषम्येति। संसृष्टी कश्चिदन्यनिरपेक्षः स्वयमेव गृह्णीयात्। सोदरेऽसंसृष्टिनि सति तु तत्सापेक्षत्वेन गृह्णीयादित्यर्थ इति। संसृष्टिनस्तु संसृष्टी

त्यच विधिभेदरूपं वैषम्यम्। एवं सोदरोऽसंसृष्टी कश्चिदन्य
निरपेक्षः स्वयं गृह्णाति च संसृष्टसोदरे तत्सापेक्षत्वेन
सह इतिसोदरस्य तु सोदरत्वाच्च विधिभेदरूपं विधि
वैषम्यमत्रप्रसङ्गादित्यर्थः। विधिवैषम्ये दृष्टान्तमाह ॥०॥

द्वयोः प्रणयन्तीत्यधिकरणे पर्व्वचतुष्टयविहि
तायावेदेर्न पर्व्वद्वये प्रतिषेधउपपद्यते। नच पर्व्व
द्वये विकल्पमापेक्षं विधानम्। पर्व्वद्वये च निरपेक्ष
मिति उत्तरवेदिविधिवैषम्यापत्तेः ॥०॥

द्वयोः प्रणयन्तीति । पर्व्वचतुष्टयेति । चातुर्मास्ययाग
प्रसङ्गे वैश्वदेववरुणप्रघासशाकमेधशुनाशीर्य्याख्याश्चत्वारो
यागाः चातुर्मास्य साध्या उक्ताः । अत्र च उपवपन्ति न वैश्व
देवउत्तरवेदिमुपकिरन्ति न शुनाशीर्य्ये ऊरूवा एतौ यज्ञस्य
यद्वरुणप्रघासः शाकमेधश्चेति । द्वयोः प्रणयन्तीति श्रुतिरस्ति।
अस्यार्थः । अत्र पर्व्वसंज्ञके यागे चतुष्के उत्तरवेदिं उपव
पन्ति निर्व्वपन्ति तस्माद्द्वयोरित्यर्थः । उत्तरवेदिश्चाग्निप्रणय
नोपयोगिपार्श्वविशेषः उत्तरवेदेः पर्व्वत्वेन यागचतुष्टये
सामान्यविधिः अत्र प्रकृतीभूतदर्शपौर्णमासीयस्याग्निप्रण
यनस्यातिदेशादेव प्राप्तेस्तदंशे न विधिः । किन्तु । तद्द्वे

उत्तरवेदिमात्रं विधीयते। इत्याह द्वयोः प्रणयन्तीत्यादि व्याख्यातमेवोक्तम् । अग्निप्रणयनार्थमुत्तरवेदेर्यागद्वये विधाने अग्निप्रणयनस्यापि यागद्वयीमत्त्व सिद्धत्वादिति। न वैश्वदेवे न शुनाशीर्ये उत्तरवेदिमुपकिरन्ति । अत्र यागद्वये वैश्वदेवत्वादिना विशेषविधिद्वयं यागद्वयोरेवाग्नि प्रणयनस्य वास्तविकत्वात्। तद्धेतुभूतं यागद्वयप्राप्त्यमाह। उद्धरेति। मन्त्रान्ताविलर्थः। यज्ञस्य यज्ञानां मध्ये। अतो द्वयोः प्रणयन्ति अग्निमितिशेषः अत्र विशेषविधिद्वयस्य निषेधरूपत्वे निषेधविधेः सामान्यविध्युपजीवकतया उपजी व्यबाधायोगात् । सामान्यविधेरपि निषिध्यमानयागद्वये प्रवृत्तौ सामान्यविधेर्निरपेक्षविधायकत्वं शाकमेधादियाग द्वयं विकल्पसापेक्षविधायकत्वञ्च वैश्वदेवादियागद्वये। तथाच शाकमेधादिद्वयोः सदैवोत्तरवेदिं वपन्ति वैश्वदेवा दिद्वये लिच्छया वपन्तीति विधिभेदरूपं वैषम्यं स्यात्। तस्मादत्र पर्युदासलक्षणया वैश्वदेवशुनाशीर्य्यभिन्ने पर्व्वा ख्ययागे उत्तरवेदिं वपन्तीत्येकएव विधिरिति द्वयोः प्रणयन्तीत्यधिकरणे यथाविधिवैषम्यमुक्तन्तथा प्रकृतेपीति मूलेनान्वयः ॥०॥

तथाचात्र यत्रैव निरपेक्षविधायकत्वन्तत्रैव संसृष्टिनस्तु संसृष्टीत्यस्य सोदरस्य तु सोदरइत्यस्य

च प्रवृत्तिः स्यात्। तथासोदरे संसृष्टिनि सोदरे चा संसृष्टिनि सत्युभयोरप्रवृत्तेस्तद्धनं न कश्चिदपि गृह्णीयादित्यापतति। तस्मात्संसृष्टिनस्तु संसृष्टीति संसृष्टधने संसृष्टिनः सामान्यतोभागप्राप्तौ तदपवादार्थं सोदरस्य तु सोदर इति वचनम्। एवञ्च संसृष्टिनोप्यसोदरस्य सोदरे सति न प्राप्तिः। किन्तर्हि विभागसंसृष्टस्यासंसृष्टस्य च सोदरस्यैवेत्युक्तन्तद् सङ्गतम्। नहि द्वयोरुभयत्रैकैकशः प्रवृत्तयोर्युगपदेकत्र प्रवृत्तिमात्रेण विधिवैरूप्यम्॥ ०॥

यथैवेति। सोदरासत्त्वस्थले असोदरसंसृष्टासत्त्वस्थले च संसृष्टिनस्तु संसृष्टीत्यनयोर्निरपेक्षविधायकत्वं बोध्यम्। उभयोः संसृष्टिनस्तु संसृष्टीति सोदरस्य तु सोदर इत्यनयोः। आपततीति। विशेषवचनाभावादिति शेषः। इत्थन्निरपेक्षसापेक्षविधाने नदोषमुपन्यस्य स्वयं विधिद्वयमुत्सर्गापवादभेदेन व्यवस्थापयति। तस्मादिति। असंसृष्टस्य चेति। तस्यापि सोदरपदार्थत्वेनापवादविषयत्वादिति भावः। इत्युक्तमिति। सोकरमिश्रैरुक्तमिति पूर्वेणान्वयः। नहीति। द्वयोर्विध्योः उभयत्र उदाहरणद्वये। एकैकशः प्रवृत्तयोः परस्परनैरपेक्ष्येण प्रवृत्तयोः विधिवैरूप्यमिति। सापेक्षनिरपेक्षोदा

दीर्घ्येन संस्तृत्विनख्वित्यादिना संस्तृत्विमात्राधिकारविधाने ओदरख्य लित्यादिना ओदरमात्राधिकारविधाने च परस्परा पेक्षा नास्ति। युगपदुपस्थितौ तु उभयोरेव विषयत्वादुभयोरेव युगपत्प्रवृत्तिरिति न वाक्ययोर्भवदुक्तरीत्या प्रत्येकं विधिभेद रूपं विधिवैषम्यमिति भावः। अत्र प्रतिवन्दिमाह ॥ ० ॥

केवलोद्गातृप्रतिस्तोत्रपच्छेदेन निरपेक्षप्रवृत्तयोः सर्व्वस्वदाक्षिण्यादाक्षिण्यशास्त्रयोर्युगपदुभयापच्छेदे सति नैकमपि शास्त्रम्प्रवर्त्तेत। विधिवैरूप्यात्। तथा चातुर्मास्यां पौर्णमासीमभिमृषेत्। पञ्चदशात्राममावास्यामिति शास्त्रयोरुपांश्वायागाग्नीषोमीययोरैन्द्रदध्यैन्द्रपयसोरेकैकशः प्रवृत्तयोर्द्वयोराग्नेये प्रवृत्तौ विधिवैषम्यापत्तेर्नैकमपि प्रवर्त्तेत ॥ ० ॥

केवलोद्गात्रिति। ज्योतिष्टोमे हविर्धानीनाम गृहमेकं अपरञ्च बहिष्पवमानाख्यमन्त्र च यथाक्रमेण हविर्धानी गृहात् ऋत्विजोर्बहिष्पवमानाख्यगृहङ्गच्छन्ति गच्छतान्त मध्ये उद्गाता ऋत्विक् यदि स्खलति तदा सर्व्वस्वदक्षिणा विधिः। यदि प्रतिहर्ता ऋत्विक् स्खलति तदा सर्व्वस्वदक्षिणा

विधित्वेति विधिद्वयमस्ति एतयोश्चैकैकस्य स्वस्वकाले एकैकशः
प्रवृत्तत्वाद्युगपत् स्वस्वनैमित्तिकत्वापि प्रवृत्तिः स्यात् ।
भवन्मते विधिवैरूप्यात् । तथा चाच प्रथमतः प्रतिलोमेऽ
सर्वस्वहारिसहकल्पितान्यत्वा उद्धारे सर्वस्वन्दत्विता हीयते
इति युक्तिसिद्धः पारम्परीणः सिद्धान्तोभवन्मते व्याहतः
स्यादिति भावः । अपच्छेदेनेति स्वस्वनैमित्तिकत्वार्थः । अत्रैव प्रति
वन्द्यन्तरमाह । तथेति । अयमर्थः दर्शपौर्णमासे यागे श्रूयते ।
चातुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्रामावास्यामिति ।
अत्र चातुर्होत्रपदेन पृथिवीहोतेत्याकारकोमन्त्र उच्यते ।
तस्य यच विनियोगस्तचातुर्होत्रा पौर्णमासीमिति च
सप्तम्यर्थे द्वितीया तेन पौर्णमास्यामिति तदर्थः । चातुर्होत्रा
मिति च परिभाषाप्राप्तिः पृथिवीहोतेत्यादिमन्त्रस्य करणता
प्राप्तये ततश्च पौर्णमास्यां पृथिवीहोतेति मन्त्रेणाभिमृशेत्स्पृ
शेदिति विधिप्राप्तौ किमिति स्पर्शकर्माकाङ्क्षायां वाक्यान्तरो
पस्थितानि ऐन्द्रदध्यादीनि हवींष्येव कर्मतयाऽन्वीयन्ते । पूर्वा
मपिन्तु पौर्णमासीपदेन कर्माभिधीयते कर्मणस्तुस्पर्शाभावा
त्तत्कालीनं मुख्यं हविरेवोपांशुयागीयं ऐन्द्रदधिरूपं प्रत्या
य्यते । एवमग्रिमवाक्येऽपि अमावास्यापदेनापि तदानीं कर्त्त
व्यस्याग्नीषोमीयस्य पयोरूपं मुख्यं हविःप्रत्याय्यत इति
व्याचष्टे । एष च विधिर्दर्शपौर्णमासान्तर्गतपौर्णमासीकर्त्तव्य
स्योपांशुयागस्य केवलदधिरूपहविः स्पर्शे विध्यन्तरनिरपेक्ष

प्रवृत्तेः उपांशुयागस्य केवलदधिकरणकत्वात् । तथा पञ्चहोतामममावास्यामित्यत्र पञ्चहोतृपदेन अग्निहोत्रेत्यादिकोमन्त्र उच्यते तस्य यत्र विनियोगस्तत्पञ्चहोतारं अमावास्यामित्यत्र सप्तम्यर्थे द्वितीया पञ्चहोत्रामिति च तन्मन्त्रस्य करणत्वलाभाय तेनामावास्यायां अभिमृषेदिति विधिः अत्रापि कर्माकाङ्क्षायामपूर्व्वाकानि हवींष्येवान्वीयन्ते अयञ्च विधिः दर्शपौर्णमासान्तर्गतस्य दर्शकर्त्तव्यस्याग्नीषोमीययागस्य केवलमैन्द्रपयोरूपद्रव्यस्पर्शे निरपेक्षप्रवृत्तिः अग्नीषोमीयस्य केवलपयोद्रव्यकरणकत्वात्। आग्नेये च दर्शपौर्णमासान्तर्गते दर्शे पौर्णमास्याञ्च कर्त्तव्ये दधिपयोरूपोभयद्रव्यके हविर्द्वयस्पर्शार्थं विध्योर्युगपत्प्रवृत्तौ भवन्मते विधिवैषम्यापातात् न कोपि प्रवर्त्तेत तथा चात्र द्वयोरेव विषयसत्त्वात्प्रवृत्त्या मन्त्रद्वयेन हविर्द्वयस्य दधिपयोरूपस्य स्पर्श इति सिद्धान्तोपि भवन्मते व्याहत इति। इदञ्च न सम्यक् युगपत्प्रवृत्तावपि सामान्यविध्योर्बाधाभावात् । तद्रूपविधिवैरूप्याप्रसक्तेरतः प्रागुक्तप्रतिबन्दिमात्रं साधीय इति धीमद्भिर्विभावनीयम् ॥ ० ॥

तस्माद्बाधनिरपेक्षं नित्यवद्विधानम् । क्वचित् क्वचिद्विध्यन्तरबाधसापेक्षमिति वैरूप्यलक्षणम् ।

तथाहि उपात्तवपन्तीति वेदिविधिसापेक्षो निषेध स्तद्बाधं विना विधिरेव न स्यादिति वेदिविधिसापेक्षं विधानम्। नच नित्यवदेव तस्य बाधः। तथाच सति निषेधोविफलः। निषेधं विनापि वेद्यकरणस्य प्राप्तेः॥ ०॥

अथैवं विधिवैषम्यलक्षणद्वैमित्याकाङ्क्षायामाह। तस्मादिति। उपात्तेति। उपात्तवपन्तीति योवेदिविधिस्तत्सापेक्ष इत्यर्थः। तद्बाधं विनेति। वेदिविधिबाधं विनेत्यर्थः विधिरेव नस्यादिति। सामान्यविधेर्वेदवादियागद्वयाविषयकत्वे तत्र विध्यभावादेव वेदकरणस्य प्राप्तत्वान्निषेधविधेरप्राप्तप्रापकत्वाभावेन विधिर्न स्यादित्यर्थः। इतीति हेतौ यतोनिषिध्यमानयागयोरपि सामान्यविधिविषयत्वेन तद्बाधेनैव वैकल्पिकस्य निषेधस्य प्रवृत्तिरतइत्यर्थः। ननु निषेधविधेर्विशेषत्वेन बलवत्त्वात्। सर्व्वदैव सामान्यविधिमुन्मूलयेत् तथाच सामान्यविधेस्तत्राप्रवृत्त्याकथन्तद्बाधेन वैकल्पिकनिषेधविधानमित्याशङ्क्यते। नचेति। तस्य सामान्यविधेः। विफलइति नित्यवदेव बाधेसामान्यविधेस्तदितरविषयत्वमेव वाच्यम्। अन्यथा तदंशे तद्विधेरननुष्ठानलक्षणाप्रामाण्यापत्तेः। तथाच विध्यभावादेव निषेधस्य सिद्धत्वात्। निषेधविधि

विफलः स्यादित्यर्थः । एतदेवोक्तम् । निषेधं विनापीति । वेद्यकरणस्येति ॥ ० ॥

ततश्च वेदिविधिरपि निषेधविधिबाधसापेक्ष विधिभावः पर्व्वद्वये तु निरपेक्ष इति भवति । विधि वैषम्यं विकल्पश्च स्यात् । रागप्राप्ते तु नित्यवद्बाधः । कादाचित्कस्याकरणस्य निषेधमन्तरेणापिप्राप्तेः ॥

ततश्चेति । सामान्यविधेर्निषिद्ध्यमानयागद्वयाविषयकत्वे चेत्यर्थः । निषेधविधिबाधेति । विरोधेन निषेधविधिबाधं विना सामान्यस्य प्रवृत्त्यसम्भवादिति भावः । विधिवैषम्यमिति । एकस्यैव वेदिविधेः पर्व्वद्वये नित्यवद्विधायकत्वमपर्व्वद्वयेच निषेधबाधसापेक्षविधायकत्वमिति विधिवैषम्यमित्यर्थः । विकल्पश्चेति । निषेधाङ्गीकारे निषिध्यमानयागद्वये वेदि करणाकरणयोर्विकल्पश्चेत्यर्थः । अयञ्च विकल्पोन व्यवस्थितः तादृशविकल्पस्थले करणे फलाधिक्यादधिकफलकामरूप स्याधिकारिणोभेदात् । किन्त्वैच्छिकः । तथाचाष्टदोषपातो वाक्यभेदश्चेति गौरवमतोलाघवात् । पर्य्युदासलक्षणया वैश्वदेवादिभिन्ने पर्व्वाख्ययागे उत्तरवेदिं वपन्तीत्येकएव विधिः कल्प्यतइति भावः । नन्वेवं न कलञ्जंभक्षयेदित्यादौ रागप्राप्ते निषेधे विकल्पः स्यात् । रागस्योपजीव्यत्वेन निषेधे

नित्यवद्बाधायोगादत आह। रागप्राप्तेति। केचित्तु कलञ्जेतरभोजनकलञ्जभोजनेतरयो रागप्राप्तत्वेन कलञ्जातिरिक्तं भुञ्जीत कलञ्जभोजनेतरत्कुर्वीतेति पर्युदासासम्भवात् निषेधे विकल्प एवेति। भ्रमनिरासार्थमाह। रागप्राप्तेस्त्विनीत्याहुः। कादाचित्कस्याकरणस्येति। नहि निषिध्यमानमनुतिष्ठन् यावज्जीवमहर्निशमनदनुतिष्ठति निषिध्यानुष्ठानस्य रागाधीनत्वेन रागस्यानियतत्वात्। सहकार्य्यान्तरविलम्बाच्चेति भावः। तथाच निषेधविधिवैयर्थ्यापत्त्या विकल्पो न किन्तु नित्यवद्बाध एवेति भावः ०॥

अत एव षोडशीग्रहणाग्रहणशास्त्रयोर्विकल्पः। येतु ब्रुवते। प्राप्तिपूर्व्वकत्वान्निषेधस्य न निमित्तं विधिरपबाधत इति न्यायेन विकल्प इति। तेषां मते न नौपशौकरोतीत्यादौ रागप्राप्तनिषेधे च विकल्पः स्यात्। किञ्च। एवं निमित्तिनः स्वनिमित्तबाधाक्षमत्वात् कथमन्यस्येऽपि बाधा तुल्यबलत्वात्। अथ निषेधस्यैवायं स्वभावो यत्स्वनिमित्तमुन्मूलयतीति तदा सर्व्वदैवोन्मूलयेत्प्राप्तेरेव दुर्बलत्वात्। येतु ब्रुवते। यादृच्छिकग्रहणप्राप्तिनिषेधोऽयम्। नतु विधितः प्राप्तस्येति तदतीवाज्ञवचनम्॥०॥

अतएवेति। यतएव सामान्यविशेषयोरेव विधिनिषेधयोः क्वचिदेकत्र प्रवृत्तौ सामान्यविधेवरूप्यं नत्वेकविशेषनिष्ठयो स्तयोरतएवेत्यर्थः। षोडशीति। तथाच श्रुतिः। अतिरात्रे षोडशिनं गृह्णातीति। अतिरात्राख्योयागविशेषः षोडशी पात्रविशेषः गृह्णातीति लिङर्थे लट्। अत्र विधिनिषेधयो र्द्वयोरेवातिरात्राख्ययागरूपविशेषनिष्ठत्वे न विधेः क्वचिन्नित्य वद्विधायकत्वाभावेन विधिवैरूप्याभावात्। निषेधाविषयक त्वाभावेन पूर्व्वोक्तन्यायेन पर्य्युदासासम्भवाच्च विकल्पइत्यर्थः। अतएवोक्तम्। एवमेवाष्टदोषोपि यद्व्रीहियववाक्ययोः। विकल्पः संश्रितस्तत्र गतिरन्या न विद्यते इति। अन्या गतिः पर्य्युदासरूपा गतिः। विकल्पः स्यादिति। रागातिदेशयोरपि निमित्ताविशेषादिति भावः। ननु प्रमाणयोस्तुल्यवत्त्वेहि विकल्पः। अतएव गौतमोपि। तुल्यबलरूपविरोधे विकल्प इत्याह स्म। तथाच षोडशिग्रहणाग्रहणशास्त्रयोर्द्वयोरेव वैदिकप्रमाणत्वाविशेषात्तुल्यबलतया विनिगमनाविरहेणैके नाप्यपरस्य नित्यवद्बाधायोगात्। पक्षतोबाधेन विकल्पोयुक्तः। इह तु रागस्य शास्त्रात् दुर्वलतया विकल्पासम्भवान्निषेधेन नित्यवद्बाधः। एवमतिदेशस्यापि सामान्यविधितया विषया न्तरे चरितार्थत्वेन पर्य्युदाससम्भवात्तुल्यबलत्वाभावेन नित्य वद्बाधएवेति कथं विकल्पापत्तिरतआह। किञ्चेति। प्राप्ते रिति। प्रापकविधेरित्यर्थः। परमतनिराकरणायाह।

वेत्विति। याहच्छिकेति। स्वारसिकीच्छा या सा यहच्छा राग इतियावत्। तथा प्राप्तं यहच्छयामादिविषयोऽयं निषेधइत्यर्थः। प्राप्तीत्यस्य कृदभिहितभावत्वेन प्राप्तार्थमाह। नन्विति। तथाच वैधग्रहणं नित्यमेवेत्याशयः॥७॥

वैधग्रहणस्यावैधग्रहणनिषेधस्य च युगपदुप संहारासम्भवादिकल्पाभावप्रसक्तेः। क्रत्वर्थतया च याहच्छिकग्रहणप्रसक्त्यभावान्निषेधान क्रत्वर्थः स्यात्॥८॥

युगपदिति। यौगपद्ये उपसंहारस्य विरोधस्यासम्भवा दित्यर्थः। उपसंहारसम्भवादितिपाठे युगपदेकदोप संहारस्य एकत्रावस्थानस्य सम्भवादित्यर्थः। विकल्पाभावेति। तथाच विरुद्धयोरेव भावाभावयोर्विकल्पत्वं इह तु वैधग्रहणा वैधग्रहणयोरविरोधात् विकल्पाभावप्रसक्तिरित्यर्थः। ननु विकल्पान श्रौतः किन्तु कल्प्यः अस्य चाष्टदोषग्रस्ततया गत्यन्तराभावएव कल्पना प्राप्ततेनु वैधेतरग्रहणनिषेधरूप गत्यन्तरसत्वात् कथन्तत्कल्पनं अतोविकल्पाभावइष्टापत्ति रेवेत्यतआह। क्रत्वर्थतया चेति। क्रत्वङ्गतया चेत्यर्थः। न क्रत्वर्थः स्यादिति। नन क्रत्वङ्गतया प्राप्तस्य प्रतियोगिनोनिषेध

स्यैव क्रत्वङ्गत्वमिति नियमे प्रमाणाभावः। यागानङ्गस्यामिष भोजनस्य निषेधे यागाङ्गव्यभिचारस्येति कथं याहच्छिक ग्रहणनिषेधस्याक्रत्वर्थत्वापत्तिरिति चेत्। व्याप्तिबलेनाक्रत्वर्थ त्वापादानं किन्त्वेवं वाक्यार्थः क्रत्वर्थतया याहच्छिकग्रहणस्य प्रसक्त्यभावात्। उपस्थित्यभावात्। तथाच निषेधविधिना प्रकरणोपस्थितवैधग्रहणस्य निषेधएव प्रत्याय्यते नत्वनु पस्थिता वैधग्रहणस्य। एवञ्च सति वैधग्रहणनिषेधस्यैव क्रत्व ङ्गतया विधिबाधित्वाभावात्। अवैधग्रहणनिषेधोन क्रत्वर्थः स्यादिति। नच षोडशिग्रहणत्वेन वैधावैधग्रहणसाधारणेन रूपेणैव प्रकरणादुपस्थितिर्न्न तु वैधग्रहणत्वेन। तथाच याहृ च्छिकग्रहणमप्युपस्थितमेवेति वाच्यम्। तथापि। भवदुक्ता वैधग्रहणविशेषाभावस्य क्रत्वर्थत्वानुपपत्तेः ग्रहणसामान्या भावस्यैवाङ्गताया विधिप्रतिपाद्यत्वात्। एवञ्च सति विरो धाद्विकल्पएवेति हृदयम्। केचित्तु क्रत्वर्थतयेत्यादिग्रन्थं अन्यथा योजयन्ति। तथाहि। नातिरात्रेतिवाक्येन ग्रहण स्याङ्गस्याभावोग्रहणाभावस्याङ्गत्वं पुरुषार्थत्वं वा प्रत्याय्यते। आद्ये क्रत्वर्थतयेति। निषेधोनिषेधविधिर्न क्रत्वर्थः न क्रतुविषयः। द्वितीये सन्निहितवैधग्रहणमपहायासन्निहितावैधग्रहणविषय त्वकल्पने गौरवं स्यात्। तृतीये प्रकरणविरोधइति तदसत्। अस्मदुक्तक्रमेणैव यथाश्रुतार्थनिर्वाहे आश्रयकल्पना गौचि त्यात्॥ ०॥

तस्मादस्मदुक्तन्यायादेव विकल्पः। तदलं किं विस्तरेण। यच्च स्वयमेव वर्णितम्। असोदरे संसृष्टिनि सोदरे चासंसृष्टिनि संसृष्टिनस्तु संसृष्टी त्यनेनासोदरस्य धनसम्बन्धप्राप्तौ तदपवादार्थं सोदरस्य तु सोदर इति वचनन्तदप्ययुक्तम्। अस्मिन्नेव विषये सोदरस्य तु सोदर इति सोदरस्य धनसम्बन्धप्रसक्तौ तदपवादार्थं संसृष्टिवचनस्यापि सम्भवात् विनिगमनाकारणाभावात्॥ ०॥

तस्मादिति। यस्माद्भवदुक्तं न युक्तन्तस्मादित्यर्थः। उक्त न्यायादिति। अस्मदुक्तन्यायात्। नित्यनिषेधे विधिनिषेधोभय वैयर्थ्यात्। नित्यविधौ च निषेधवैयर्थ्यं स्यादित्येवंरूपात्। एवकारस्य भिन्नयोजनया विकल्प एवेत्यर्थः। ननु भवदुक्त समुच्चय इत्यर्थः। तदलम् उक्तमते दूषणान्तरं मतान्तरस्य दूषणमप्यन्यदा निबद्धमेव तिष्ठतु किं विस्तरेण ग्रन्थबाहुल्येन। तथा च ग्रन्थगौरवतया उक्तार्थे दूषणाभावं मतान्तरस्य दूषणञ्च नोपनिबद्धमिति भावः। श्रीकरमतदूषणस्यैव प्रकृतत्वात्। संसृष्टिनस्त्विति सोदरस्य त्विति वचनयोस्त द्व्याख्यानमनूद्य दूषयति। यच्चेति। वर्णनमेवाह। असोदर इति। इत्यनेन वचनेन। असोदरस्य संसृष्टिनोऽसोदरस्य

धनसम्बन्धप्राप्तौ धनाधिकारप्राप्तौ। तदपवादार्थन्तदाधार्थं विनिगमनेति। एकतरपक्षपातिनी युक्तिर्विनिगमना तद्रूप कारणाभावादित्यर्थः। अन्योदर्य्यः संसृष्टी यः स अन्योदर्य्य धनं न हरेत्। सोदरे सतीत्युत्तरार्द्धस्वरसाल्लभ्यते तर्हि कोगृह्णीयादित्यत आह। असंसृष्ट्यपीति। अपिरेवार्थोभिन्न क्रमेण योजनीयः तेनासंसृष्टी सोदरएव गृह्णीयादित्यर्थः किम्पुनः संसृष्टी सोदरइति कैमुतिकन्यायसिद्धाधिकारोऽपि संसृष्टी सोदरस्तकारेण समुच्चीयते इतिपूर्व्ववचने यत्सो दरस्य संसृष्टसोदरापवादकत्वमुक्तन्तदेव द्वितीयवचनेन विवृतमिति यदुक्तन्तदपि दूषयितुमुपन्यस्यति ॥ ० ॥

यच्च संसृष्टिनस्तु संसृष्टीत्येतद्विवरणार्थत्वेनान्यो दर्य्यइति वचनं व्याख्यातम्। तदप्यतीवायुक्तम्। अन्योदर्य्यवचनादेव विवक्षितार्थलाभात्। संसृष्टि नस्त्वित्यस्यानर्थक्यापत्तेः। किञ्च। अन्योदर्य्यस्तु संसृष्टीत्यस्यायमर्थः। अन्योदर्य्यस्तु संसृष्टी यः स नान्योदर्य्यधनं हरेत्। किन्त्वसंसृष्ट्यपि सोदरप दानुसङ्गात्सोदर एव गृह्णीयात्। संसृष्टोऽपि नान्य मातृजोगृह्णीयादिति व्याख्यातन्तदपि न। पूर्व्वार्द्धे एकस्यान्योदर्य्यपदस्य पुनरुक्तत्वात्। तथोत्तरार्द्धेऽपि

नान्यमातृजस्यत्यस्यानर्थक्यापत्तेः । अपि शब्दस्य चैवकारार्थेऽवर्णनात्। किञ्च। सोदरे चासंसृष्टिनि असोदरस्य संसृष्टिनोऽपवादार्थं सोदरवचनस्य वर्णितत्वात्। सोदरासोदरयोरसंसृष्टिनोरप्रवृत्तत्वात्तुल्यवदेवाधिकारः स्यान्न वा कस्यचिदपि स्यात् ॥०॥

यत्तेति आनर्थक्यापत्तेरिति। विवरणवचनादेव तदर्थलाभे विधीयमानवचनवैयर्थ्यादिति भावः। वक्ष्यमाणदूषणान्तरं स्पष्टयितुमुक्तविवरणं दर्शयति। किञ्चेति। तथाच वचनयोरेकार्थपर्य्यवसाने विनिगमनाविरहात् नैकतरवैयर्थ्यम्। अतएवोक्तमस्माभिर्नान्यतरवैयर्थ्यम्। इतीति शेषः। अयं वक्ष्यमाणोऽर्थः श्लोकेनोक्त इति शेषः। पुनरुक्तत्वादिति अन्योदर्य्यः संसृष्टी न गृह्णीयादित्यनेनैव प्रकृतार्थसिद्धौ अन्योदर्य्यपदान्तरस्य व्यर्थत्वादित्यर्थः। ननु सर्व्वमिदम्भवदुक्तदूषणमकिञ्चित्करम्। तथाहि। सोदरवचनस्यैवापवादकत्वे सोदरस्याधिकारोपकारकत्वेन न्यायसिद्धं इत्यतः तथा नतु संसृष्टिवचनस्य न्यायाभावात् अन्योदर्य्यइति नान्यमातृजत्वमनयोर्भवदुक्तव्याख्यानेऽप्यविशेषात्। अपिशब्दस्याव्ययानामनेकार्थत्वेन एवकारार्थेऽपि वर्त्तनादतएव अविवादा

यदा भूमिः पौरुषेणापि भुज्यते इत्यत्राप्येवार्थो द्रष्टव्य इत्यत आह। किञ्चेति। अप्रवृत्तत्वादिति। अपवादस्य उत्सर्गाविषये ऽप्रवृत्तत्वादिति भावः। तुल्यवदिति। विशेषकाभावाद्भ्रातर इति सामान्यवाक्येन भ्रातृत्वाविशेषात् द्वयोरेव युगपदधिकारः स्यादित्यर्थः। नवा कस्यचिदिति भ्रात्रधिकारबोधक सामान्यवचनस्य संसृष्टादिविशेषविषयकतयोपसंहृतत्वादिति भावः ॥०॥

अथात्रापि सोदरवचनमेव प्रवर्त्तते तदैकत्र संसृष्टिवचनबाधसापेक्षमन्यत्र तु बाधानपेक्षमिति भवतामेव विधिवैरूप्यम्। यथा। सोमे विधीयमाना वेदिर्हीचणीयादिष्वतिदेशप्राप्तवेदिविधिबाधे नान्यत्र बाधं विनैवेति वैरूप्यादवेदिमतान्तद्रष्टव्यमित्युक्तम्। अस्मन्मते तु श्रीकरसंमतमपि विधिवैरूप्यन्नास्ति। संसृष्टिसोदरवचनयोरेकैकविषयत्वादन्योदर्य्यवचनस्य सोदरस्यासंसृष्टिनः सासादरस्य तुल्यवदधिकारज्ञापनार्थत्वात्। तथाहि। अन्योदर्य्यस्तु संसृष्टी सन् सत्यपि सोदरेऽसंसृष्टिनि धनं हरेत्। नान्योदर्य्योऽसंसृष्ट्यपि गृह्णीयादिति पूर्व्वार्द्धस्यार्थः। तत्र किं सोदरस्तदानीं न गृह्णीयादित्यपेक्षायां उत्तरार्द्धेनोत्तरम् ॥०॥

यथेति। सोदरवचने सोदरपदस्य संसृष्टसंसृष्टिसाधारणसोदरपरत्वेनाचापि सोदरवचनं प्रवर्त्ततइत्यर्थः। एकच संसृष्टसोदरासंसृष्टसोदरत्वे अन्यच सोदरासोदरयोःसंसृष्टिनोरित्युक्तस्थले सोदरवचनस्यासोदरस्य पुरस्कारेणासोदरमाचबाधसापेक्षत्वेन संसृष्टिनोऽप्यसोदरस्य बाधसापेक्षत्वावधकत्वादिति भावः। यथेति अचायमर्थः पौर्णमासयागे प्रकृतौ वेदिर्विहिता साचातिदेशात्तद्विकृतीभूतदीक्षणीयेष्टौ प्राप्ता वाक्यान्तरे च सामान्यतः सोमद्रव्यकयागे वेदिर्विहिता तच दीक्षणीयेष्टेरपि सोमद्रव्यकतया यदि सामान्यवचनन्तच प्रवर्त्तते। तदातिदेशविधिबाधेनैव प्रवर्त्तते। अन्यथा प्राप्तत्वाद्विधित्वानुपपत्तेः। पौर्णमासविकृतिभिन्ने सोमद्रव्यकयागान्तरे त्वतिदेशाभावात्तद्बाधेनेति विधिवैषम्यादवेदिमतं। वाक्यान्तरप्राप्तवेदिकभिन्नानां यागानान्तस्सामान्यवेदिविधानस्फुव्यमिति। तथोक्तं विधिवैषम्यं यथा तथा प्रकृतेऽपीति। सीव्याह। असम्मतं त्विति श्रीकरेति। वस्तुतस्तु विधिवैरूप्यमेव न भवतीति भावः। अन्योदर्य्यवचनस्य तुल्यवदधिकारज्ञापकत्वं यथा तथा व्याकरोति। तथा हीति। नान्योदर्य्यइति। एतेनैकतरस्यान्योदर्य्यवचनस्य वैयर्थ्यमपि हृतम्॥०॥

असंसृष्ट्यपि चादद्यात् सोदर इत्यनुषज्यते। संसृष्टोऽन्यमातृजएव न केवलः किन्तु भार्य्या विभज्य ग्रहीतव्यमित्यतोविधिवैषम्यमपि परिहृतम्। तथा मनुरप्येतदेव दर्शयति । सोदर्य्याविभजेयुस्तं समेत्य सहिताः समम्। भ्रातरोये च संसृष्टाभगिन्यश्च सनाभयः। सोदर्य्यमात्राणां सोदर्य्याइति। असोदराणाञ्च संसृष्टानां संसृष्टाइति बहुवचनान्तस्वपदादेवेतरेतरयोगावगतेः समेत्य सहिताइति पदं उभयसाहित्यार्थमेव युक्तम् । अन्यथानर्थक्यात्। अतउभयोरितरेतरयोगस्याश्रवणादित्यहृदयव्याहृतम् । किञ्च येचेति चकारश्रुतेस्वार्थे द्वन्द्वसमासस्यापि श्रवणादितरेतरयोगस्याश्रवणाभिधानम्। द्वन्द्वस्याप्यनर्थतामापादयति ॥ ० ॥

असंसृष्ट्यपीति । तथा चैकस्यैवासंसृष्टिपदस्य काकाक्षिन्यायादुभयत्रान्वयइति भावः । केवलइति । तथा च संसृष्ट्यन्योदर्य्यसोदरयोर्व्यवस्थितविकल्पेनाधिकारभ्रमनिरासाय तुल्यवदधिकारप्रापकं नान्यमातृजवचनमपि सार्थकमिति भावः । स्वोक्तव्याख्याने मनुसम्वादमाह । तथेति । तुल्यरूपाणां सोदरासोदराणां मध्ये सोदराएव सहिताविभ

भेरन्। संसृष्टासंसृष्टतुल्यरूपाणां मध्ये संसृष्टाः सहिताविभ जेरन् इति वचनार्थमाशंक्याह। सोदर्य्यमात्राणामिति। इतरेतरावगतेः। सोदरमात्राणां संसृष्टमात्राणाञ्च परस्परसाहित्यावगतेः। उभयसाहित्यार्थमिति। सोदरसंसृष्टसोदरसाहित्यार्थमित्यर्थः। एतच्चान्योदर्य्यस्त्वित्यादिना स्ववक्ष्यमाणोकमूलकत्वादुक्तम्। व्यत इति। सहितपदादुभयसाहित्यश्रवणयतोऽत इत्यर्थः। अध्याहृतमिति। इदं ज्ञानकेन वचनार्थानभिज्ञव्याहृतमित्यर्थः। ननु एकस्य द्वयोर्वा तद्धनाधिकारानुपपत्त्या उद्देश्यविशेषणत्वेन बहुत्वं यथा न विवक्षितं। तथा साहित्यमप्युद्देश्यतदर्थं समेत्य सहिता इत्युक्तम्। ननु तेषामितरेतरसाहित्यार्थम्। तत्कथमितरेतरसाहित्यश्रवणमत आह। किञ्चेति। चार्थ इति। चार्थे द्वन्द्व इति स्मरणेति शेषः। अतदर्थत्वं इतरेतरयोगानभिधायकत्वं आपादयतीति। तथाच। अनन्यथासिद्धचकारबलेनैवेतरसाहित्यावगम इति भावः। न चैवं साहित्यस्य विवक्षितत्वे एकस्य सोदरमात्रस्य वा तद्धनाधिकारानुपपत्तिरिति वाच्यम्। बहुभ्रातृकनिरूपण एवैतदभिधानादिति ॥०॥

तस्मात्सोदरासोदरमात्रसद्भावे सोदराणामेव।

अत एव बृहस्पतिः। एकोदरे जीवति तु सापत्न्या न लभेद्धनम्। स्थावरेऽप्येवमेव स्यात्तदभावे लभे

तवै। स्थावरेऽप्येवमेवेति विभक्तस्थावराभिप्रायेण। यस्मादनन्तरमेवाह।

यमः। अविभक्तं स्थावरं यत्सर्व्वेषामेव तद्भवेत्। विभक्तं स्थावरं ग्राह्यं नान्योदर्य्यैः कथञ्चन। सर्व्वेषां सोदरासोदराणामित्यर्थः। सोदराणामेव मध्ये एकस्य संसृष्टत्वे तस्यैव। असंसृष्टिसोदरासोदर संसृष्टिसद्भावे च द्वयोरेव। सापत्नमात्रसद्भावेऽपि प्रथमं संसृष्टिनस्तदभावे चासंसृष्टिनोऽसोदरस्य मृतधनं प्रत्येतव्यम्। अतएवोक्तक्रमेण बहूनाम धिकारप्रतिपत्त्यर्थं भ्रातरइति बहुवचनमुक्तम्। अन्यथानर्थकम्भवेत्। संसृष्टिनस्तु संसृष्टीत्येतच्च तुल्यरूपसम्बन्धिसमवाये संसर्गकृतविशेषप्रतिप त्त्यर्थम्॥ ०॥

उपसंहरति। तस्मादिति। सोदरस्यासोदरमात्रस्येति द्वन्द्वः मात्रपदेन संसृष्टत्वव्यवच्छेदः। केचित्तु सोदरासोदरयोर्द्वयो रेव मात्रपदार्थान्वयमभ्युपेत्य मात्रपदं संसृष्टत्वासंसृष्टत्वाभाव परमिति व्याचक्रुः। अतएवेति। उक्तमनुवचनानुरोधादेव। वृहस्पतिः तुल्यरूपसोदरासोदरयोरेव मध्ये सोदरस्याधि कारं बोधयति। मतसंसृष्टसोदरसंसृष्टसोदरयोः मध्ये संसृष्ट

सोदरसंसृष्टासोदरस्य धनं निराकरोतीत्यर्थः। जीवतीति। अधिकारिणि सतीत्यर्थः। एवमेवमिति। स्थावरमपि सोदर एव गृह्णीयादित्यर्थः। लभेत इति सापत्न इत्यनुषञ्जनीयः। सर्व्वेषामिति। तुल्यरूपाणां सोदरासोदराणामित्यर्थः। पूर्व्ववचने तुल्यरूपाणामेव प्रक्रान्तत्वात्। सोदराणामेवेति यदुक्तन्तत्र विशेषमाह सोदराणामेव मध्ये इति सापत्नमात्रेति। तस्याप्येकोत्पन्नत्वेन भ्रातृत्वादिति भावः। भ्रातर इति बहुवचनस्यार्थवत्त्वं वक्ष्यामीति यदुक्तन्तदाह। अत एवेति। संसृष्टिनस्त्विति। बहुवचनं न भ्रातृमात्रविषयम्। किन्तु तुल्यरूपसम्बन्धिमात्रविषयम्। सामान्ये बाधकाभावे सङ्कोचस्यान्याय्यत्वादिति व्यवस्थापयति। संसृष्टिनस्त्विति। विशेषाधिकारित्वं तुल्यरूपसम्बन्धिनां विवृणोति ॥०॥

तेन सोदराणां सापत्नानां वा तथा भ्रातृपुत्राणां पितृव्यादीनां वा तुल्यानां सद्भावे संसर्गी गृह्णीयात्। वाक्यादविशेषश्रुतेः। पूर्व्ववचनेन सर्व्वेषामेव प्रकृतत्वात्सर्व्वेष्वेव चापेक्षासद्भावात्। अतो भ्रातृमात्रविषयं वचनमित्यनादरणीयमिति भ्रात्रधिकारः॥ तदभावे भ्रातृपुत्रस्य॥ भ्रातृगामीत्यभिधाय तदभावे भ्रातृपुत्रगामीति विष्णुवच

नात्। तत्र प्रथमं सोदरभ्रातृपुत्रस्य तस्य चाभावेऽसोदरभ्रातृपुत्रस्याधिकारः। सोदरस्य तु सोदर इतिवचनात्। असोदरभ्रातृपुत्रो हि धनिनो मृतस्य मातरं विहाय स्वपितामहीविशिष्टस्य धनिपितुः पिण्डदानेति सोदरभ्रातृपुत्राज्जघन्यस्तदनन्तरन्धनमधिकरोति ॥ ० ॥

तेनेति। सोदराणामित्यादिषष्ठ्यन्तेषु सर्व्वत्र सोदरमात्राणामित्यादिमात्रान्तर्भावः। तथा भ्रातृपुत्राणां सोदरभ्रातृपुत्राणां सापत्नभ्रातृपुत्राणाञ्च पितृव्यादीनामित्यत्रापि तथा। वाक्यादिति। संसृष्टिनस्त्विति वचनतो भ्रातर इति श्रवणादित्यर्थः। नन्वेवं वचनस्य तुल्यरूपसम्बन्धिसद्भावमात्रविषयत्वे सोदरासोदरयोरसंसृष्टिसंसृष्टिनोः सद्भावे कथमेतद्वचनप्रवृत्तिः स्वयमुक्तासङ्गच्छतामिति चेन्न। तुल्यरूपाणामिति न वचनप्राप्तम्। किन्तु न्यायप्राप्तमेव। तथाच न्यायाविरोधेनान्यत्रापि प्रवृत्तौ बाधकाभावः। तुल्यरूपाणामिति। नियमपरत्वाभावादिति। संसृष्टिसोदरवचनयोरेकैकविषयत्वादित्युक्ततरव्याख्यानपक्षे अन्योदर्य्यवचनस्यैवात्र प्रवृत्त्या संसृष्टिवचनस्याप्रवृत्तेरिष्टत्वादिति पूर्व्ववचनेन पत्नी दुहितर इति वचनेन सर्व्वस्यैव भ्रातृभ्रातृपुत्रगोत्रजपदोपात्त

पितृव्येष्वेव । अपेक्षाभ्रातृपुत्रयोः पितृव्ययोर्वा संसृष्टासंसृष्टिनो र्मध्ये कोऽगृह्णीयादित्याकाङ्क्षा । अतउक्तयुक्तेः ॥ भ्रात्रभावे भ्रातृपुत्रस्याधिकारमाह ॥ तदभावइति । प्रमाणमाह । भ्रातृगामीत्यभिधायेति । तत्र भ्रातृपुत्राणां मध्ये । प्रथम मिति । सोदरभ्रातृपुत्रस्यासोदरभ्रातृपुत्रात् प्रागधिकार बाधकवचनाभावेऽपि । सोदरस्य तु सोदरइति वचनेन सोदरस्यासोदरबाधकत्वावगमात् । बाधकपुत्रेण बाध्यपुत्रस्य बाधान्याय्यइत्यभिप्रायः । अत्र हेत्वन्तरमप्याह । असोदर भ्रातृपुत्राद्धीति । सोदरभ्रातृपुत्रादिति । इतश्च मातर मादाय पितामहपिण्डदातुरित्यादि ॥ ० ॥

नच सपत्नीकत्वेन सपत्नीमातुः सपत्नीपितामह्याः सपत्नीप्रपितामह्याश्च श्राद्धेऽनुप्रवेशः । मात्रादिशब्दानां स्वजननीपितृजननीपितामहजननीष्वेव मुख्यत्वात् । तैरेव च पदैः श्राद्धेऽनुप्रवेशात् ॥

तथा स्वेन भर्त्त्रा सह श्राद्धं माता भुङ्क्ते स्वधामयम् । पितामही च स्वेनैव स्वेनैव प्रपितामही । सपत्नीमात्रादीनाञ्च पार्व्वणश्राद्धानुप्रवेशो निषिद्ध एव ।

यथा पठन्ति। अपुत्रा ये मृताः केचित् स्त्रियोवा पुरुषाश्च ये। तेषामपि च देयं स्यादेकोद्दिष्टं न पार्व्वणम्। किञ्च। सपत्नीकश्राद्धविधानस्य नित्यत्वं सर्व्वजनसिद्धत्वात्। सपत्नीमात्रादीनाञ्चानियतत्वात्। नित्यानित्यसंयोगविरोधेन मात्राद्यपेक्षमेव सपत्नीकश्राद्धविधानं युक्तम्॥०॥

सपत्नीकत्वेनेति। एतच्च सपत्नीकत्वेनैव पित्रादीनान्देवतात्वमितिमतमाश्रित्याभिहितम्। वस्तुतोऽमावैतत्ते यजमानस्य पित्रे। अमावैतत्ते यजमानस्य पितामहायेत्यादिनिरपेक्षश्रुतिश्रवणात्। पत्नीनिरपेक्षाणामेव पित्रादीनान्देवतात्वम्। किन्तु तत्पिण्डभोगमात्रे पत्न्याः। सहत्वमेवेति शूलपाणिप्रभृतयोऽप्येवमिति बोध्यम्। मात्रादिशब्दानामिति। स्वेन भर्त्रा सह श्राद्धमित्यादिवचनस्थानामित्यर्थः। आदिना पितामहीप्रपितामहीशब्दयोर्ग्रहणम्। तैरेवेति। मात्रादिबोधकैः सपत्नीकपदैरेवेत्यर्थः। सपत्नीकत्वेनैव देवतात्वाङ्गीकर्यत्वाश्रुतासङ्गतेः। ननु पुत्रहीनानां सपत्नीमात्रादीनाम्पार्व्वणनिषेधेऽपि सपुत्राणान्तासाम्पार्वणानुप्रवेशे बाधकाभावइत्यतआह। किञ्चेति। नित्यानित्येत्यादि। एकस्यैव सपत्नीकाभिलापविधेर्मात्राद्यंशे नित्यवद्विधायकत्वं सपत्नीमात्राद्यंशे

कादाचित्कविधायकत्वमित्येतयोर्विरोधेनेत्यर्थः। नच माघा द्यंशेऽपि कादाचित्कविधायकत्वमेव जीवन्माघादिस्थले तद् सम्भवादिति वाच्यम्। एतस्य आद्यार्द्धमाघादिविधायक त्वात्। अन्यत्र सपत्नीकाभिलापस्य प्रसक्त्यभावादिति॥०॥

ननु सोदरभ्रातृपुत्रवत्सोदरपितृव्यस्य धनि देयसपत्नीकपूर्व्वपुरुषद्वयपिण्डदातृत्वात्। धनि पितृव्यभ्रातृपुत्रयोः समानोऽधिकारः स्यात्। उच्यते। पितृव्योहि धनिनः पितामहप्रपितामहयोः पिण्डदः। भ्रातुः पुत्रस्तु धनिनः प्रधानम्पितर मेवादाय पुरुषद्वयस्य पिण्डद्वयदानेनेति च स एव बलवानिति पितृव्यात्पूर्व्वमधिक्रियते। अतएव भ्रातृनप्तापि पितृव्यस्य बाधकः। मृतधनिकस्य पितुः प्रधानस्यैव पिण्डदातृत्वात्। भ्रातुः प्रतिनप्ता धनिनः पितृसन्ततिरपि पितृव्येण बाध्यते। पञ्चम त्वेन पिण्डदातृत्वाभावात्।

तथाच मनुः। त्रयाणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तते। चतुर्थः सम्प्रदातैषां पञ्चमो नोपपद्यते। इत्यनेन पञ्चमो निषिद्धः। किन्तु पितुरपि प्रपौत्र पर्य्यन्ताभावे पितृदौहित्रस्याधिकारो बोद्धव्यः। धनि

दौहित्रस्यैव एवं पितामहप्रपितामहसन्ततेरपि दौहित्रान्तायाः पिण्डप्रत्यासत्तिक्रमेणाधिकारो बोद्धव्यः। दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्रवदिति हेतोरविशेषात्। स्वदौहित्रवत् पित्रादिदौहित्रस्यापि तद्भोग्यपिण्डदानेन सन्तारकत्वात्। अतएव मनुना पृथगमीषामधिकारो न दर्शितः। त्रयाणामित्यनन्तरइति वचनद्वयेनैव सङ्गृहीतत्वात्। याज्ञवल्क्येन च पित्रादिदौहित्रस्यापि तद्गोत्रजातस्य पिण्डदानानन्तर्य्यक्रमेणाधिकारप्रतिपत्त्यर्थं गोत्रजपदङ्कृतम् ॥ ० ॥

सोदरपितृव्यस्य पितुः सोदरस्य। अतएव उपकाराधिक्यादेव। भ्रातृनप्ता भ्रातृपौत्रः। उपकाराधिक्यादाह। मृतधनिकस्येति पिण्डदातृत्वाभावे मानमाह। तथाचेति। पितृदौहित्रस्येति सोदरवैमात्रेयभगिनीपुत्रस्यापि पितृव्यादिसत्त्वेऽपीत्यर्थः। यद्यपि दुहितृभावे दौहित्रस्यैव भगिन्याएव प्रागधिकारोयुक्तः तथापि तस्याः स्त्रीत्वेन पार्व्वणपिण्डदत्वाभावान्नाधिकारः। दुहितुस्तु दौहित्रात्पूर्व्वं अङ्गादङ्गात्सम्भवतीत्यादिविशेषवचनादेवाधिकारइति भावः। धनिदौहित्रस्यैवेति। यथा धनिप्रपौत्राधस्तनदौहित्राधि

कारस्थेत्यर्थः । सपिण्डानामित्यनन्तरमिति । सपिण्डानामुदकं कार्यमित्यनेन पिण्डदानमभिधाय अनन्तरः सपिण्डाद्य इत्यनेनानुपदं लिख्यमानेन पिण्डदानाधिकारबोधकेने त्यर्थः । गोत्रजपदस्य प्रयोजनान्तरमप्याह ॥ ७ ॥

सपिण्डस्त्रीणाञ्च व्युदासार्थन्तासामतद्गोत्र जातत्वात्।

अतएव अर्हति स्त्रीत्यनुवृत्तौ बौधायनः। न दायं निरिन्द्रिया अदायाश्च स्त्रियोमता इति श्रुतेः। न दाय मर्हति स्त्रीत्यन्वयः। पत्न्यादीनां त्वधिकारोविशेष वचनादविरुद्धः। प्रपितामहसन्तानस्य दौहित्रान्तस्य मृतभोग्यपिण्डदातुरभावे मृतदेयमातामहादि पिण्डदानेन पिण्डानन्तर्य्यान्मातुलादिग्रहणार्थं बन्धुपदमप्युक्तवान् याज्ञवल्क्यः। मनुना तु पिण्ड दानानन्तर्य्यवचनेनैव दर्शितम् ✗ मृतदेयमाता महादिपिण्डत्रयस्य मातुलादिभिर्दीयमानत्वात्। मातुलाद्यर्थलब्धनस्य धनहारेण तस्यापि पिण्डदा तृत्वात्। धनार्जनस्य हि प्रयोजनद्वयम् ✗ भोगार्थ न्दानाद्यदृष्टार्थञ्च । तत्रार्जकस्य तु मृतत्वाद्धने भोग्यत्वाभावेनादृष्टार्थत्वमेव युक्तम्।

अतएव वृहस्पतिः ॥ समुत्पन्नाद्धनादर्द्धन्तदर्थं स्थापयेत्पृथक्। मासषाण्मासिके श्राद्धे वार्षिके च प्रयत्नतः ॥०॥

सपिण्डस्त्रीणाञ्चेति। तासां व्युदासे वचनान्तरसम्वादन्दर्शयति अतएवेति निरिन्द्रियाजात्यन्धादयः। स्त्रियश्च अदाया दायानर्हा मता इत्यन्तं स्त्रञ्चानुवर्त्तमानमर्हतीति क्रियान्वयेन निषिद्धं स्पष्टयति। श्रुतेरिति। श्रुतेरुक्तवचनस्य। स्त्रीति निरिन्द्रियस्याप्युपलक्षणं। तथाच पिण्डवहिर्भावेन यस्मान्निरिन्द्रियाः स्त्रियश्च न दायार्हा अतः स्त्रीनिरिन्द्रियश्च न दायमर्हतीत्यर्थः। नन्वेवम्पत्न्यादीनामपि अनधिकारापत्तेः। तासामपि पिण्डवहिर्भावाविशेषात् अतआह। पत्न्यादीनान्त्विति। आदिना दुहितृमातृपितामहीग्रहणम् विशेषवचनात्। पत्नीदुहितरइति। माता च क्यहरी ज्ञेयेति पितुर्माताहरेद्धनमित्यादिविशेषवचनादेवेत्यर्थः। भोग्यत्वाभावेन साक्षाद्भोग्यपिण्डदातुरभावे न परम्परया भोग्याभावेन च समुत्पन्नात् सम्बन्धितया जातःत् तदर्थं मृतस्यार्थं मासषाण्मासिकश्राद्धादौ तन्निमित्तमित्यर्थः ॥०॥

तथा चापस्तम्बः। अन्तेवासी वार्थान् तदर्थेषु धर्म्मकृत्येषु प्रयोजयेत् दुहिता वा। मासिकादिना तद्भोगार्थं। धर्म्मकृत्येष्वित्यदृष्टार्थत्वे हेतुः। अतएव दत्तभुक्तफलन्धनमिति स्मरन्ति। तस्मात्तद्भोग्यपिण्डदातुरभावे तद्देयपिण्डदातुर्म्मातुलादेरधिकारो न्याय्य एव। अतएव त्रयाणामिति अनन्तरं इति वचनद्वयेनैवायमर्थो दर्शितः * इति मत्वा तदनन्तरं मनुनोक्तम्। अत ऊर्द्ध्वं सकुल्यः स्यादाचार्य्यः शिष्य एव वा। सकुल्यो वृद्धप्रपितामहादिसन्ततिः समानोदकाश्च भण्यन्ते। तेषामुपन्यासक्रमेणाधिकारः। तदभावे आचार्य्यशिष्यादीनां अन्यथा कथं मातुलादीनां मनुविरुद्धोऽन्तर्भावः शक्यते। तस्मान्मनुना पूर्ब्ववचनद्वयप्रतिपादितोऽयमर्थ इत्यविरोधः। अतएव दायभागप्रकरणे।

त्रयाणामुदकं कार्य्यन्त्रिषु पिण्डः प्रवर्त्तते। चतुर्थः सम्प्रदातैषां पञ्चमो नोपपद्यते। इत्युक्त्वाऽनन्तरः सपिण्डाद्यस्तस्य तस्य धनम्भवेदिति लिखितम्। पञ्चमस्यैकपिण्डसम्बन्धहीनस्य पितृमातृकुलजातीदेरेकपिण्डसम्बन्धिसद्भावेऽनधिकारार्थम्। अन्यथा

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते इति सपिण्डत्व स्योक्तत्वाद् अनन्तरः सपिण्डाद्य इत्यनेन चानन्तर्य्यस्य धनग्रहणकारणत्वेनाभिहितत्वात्त्रयाणामित्यनर्थकं स्यात्। नच त्रैपुरुषिकश्राद्धविधानार्थमिति वाच्यम्॥०॥

अन्तेवासीत्यापस्तम्बवचने भिन्नक्रमो बोध्यः दुहितुः प्रागधिकारात्। दत्तभुक्तफलमिति दानभोगफलमित्यर्थः। अत एवेति। भोग्यदेयपिण्डान्तर्य्यक्रमेण मातुलादिपर्य्यन्तानामधिकारो यत अत एवेत्यर्थः। वृद्धप्रपितामहेति। तथाच मान्प्रसूत्य विभक्तदायादान् सकुल्यानाचक्षते इति बौधायनवचने तेषां सकुल्यत्वस्य दर्शितत्वादिति भावः। उपन्यासक्रमेणेति। आदौ सकुल्यानां ततः समानोदकानामिति क्रमेणेत्यर्थः। तदभावे समानोदकपर्य्यन्ताभावे अन्यथा ऋतुवचनस्य मातुलाद्यभिप्रायकत्वाभावे। पूर्व्ववचनेति। पूर्व्वलिखितवचनेत्यर्थः॥०॥

दायभागसन्दर्भमध्यपाठात्। श्राद्धस्य वचनान्तरविहितत्वात्।

तथाच मनुः। स्वाध्यायेनार्चयेदृषीन् होमैर्देवान् यथाविधि। पितॄन् श्राद्धेन नॄनन्नैर्भूतानि

वत्तिकर्म्मणा॥ नच जननक्रमेणानन्तर्य्यग्रहणार्थं वचनम्। नतु प्रदातृत्वेनानन्तर्य्यार्थमिति वाच्यम् जननक्रमस्य वचनादनवगतेः। किन्तूदकवत् त्रिभ्यः पिण्डदानञ्चतुर्थोऽधस्तनः पिण्डदाता पञ्चमस्तु पूर्व्वतनोन सम्प्रदानम् नाप्यधस्तनः पञ्चमः पिण्डदातेत्यभिधायानन्तर्य्यमभिदधानो मनुः प्रदातृत्वातिशयेनैवानन्तर्य्यं ज्ञापयति। तस्माद्योयस्तत्कुलोत्पन्नोऽनङ्गोत्रोपि स्वदौहित्र पितृदौहित्रादिस्तत्कुलोत्पन्नोवा मातुलादिर्धनिनोमृतस्य मातृकुलगतत्रैपुरुषिकपिण्डदातृतया एकपिण्डसम्बन्धेन सपिण्डस्तस्य तस्याप्यधिकारार्थ त्रयाणामिति वचनम्। आनन्तर्य्येण च विशेषार्थमनन्तरइति वचनं वर्णनीयम्। तेन मृतभोग्य मृतदेयपित्रादित्रयपिण्डदातुः पितृदौहित्रादेरभावे मृतदेयमातामहादिपिण्डदातॄणां मातुलादीनामानन्तर्य्यक्रमेणाधिकारक्रमोबोद्धव्यः॥०॥

सन्दंशेति। दायभागप्रकरणपाठादित्यर्थः। पुत्त्रमार माह। आदद्ध्यंति। पितॄन् पित्रादित्रिकान् अथावेतस्मै यजमानस्य पित्रे इत्यादिश्रुत्येकवाक्यत्वात्। तथाच त्रयाणा

स्वधनरूपयोगार्थस्य तथापि स्यादिति भावः । एकपदोपात्तत्वेपि उपकारतारतम्यादधिकारक्रमइति तात्पर्य्यम्। आचार्य्यः वेदाध्यापयिता । शिष्यश्च वेदाध्येता । सब्रह्मचारीति। मनुना आचार्य्याभावे शिष्यस्योक्तत्वात् याज्ञवल्क्येन च शिष्याभावे सब्रह्मचारिणोविधानात् । आचार्य्यवाध्यत्वं सब्रह्मचारिणोदण्डापूपायितमिति। निर्द्देशादिति । याज्ञवल्क्यनिर्द्देशादित्यर्थः । पिण्डगोत्रेति । सपिण्डत्वसगोत्रत्वसमानप्रवरत्वसम्बन्धवन्तः पाठिकक्रमेण रिक्थं हरेयुरित्यर्थः अन्यथेति। सगोत्रादीनामभावे राज्ञोऽधिकारोवाच्यः नच पृथिव्यां तत्सगोत्राभावोनिर्णेतुं शक्यइत्याशयः । उपकारो धनाधिकारप्रयोजकइत्यर्थः॥ ० ॥

तत्र यदि त्रयाणामित्यादिना पितृदौहित्र मातुलादीनामधिकारोनोक्तस्स्यात्तदा सकुल्यादीनां नियतक्रमाणां मध्येऽनुप्रवेशाभावादधिकारएव न स्यात्। नच माभूदिति वाच्यम्। याज्ञवल्क्येन तेषां गोत्रजबन्धुपदाभ्यां दर्शितत्वात् तस्मान्मनुनापि त्रयाणामित्यादिनैव दर्शितमिति वाच्यम्। तस्माद्यथा यथा मृतधनस्य तदुपयुक्तत्वं भवति तथा तथाऽधिकारक्रमोऽनुसरणीयः। अत

एव पुत्रपौत्रप्रपौत्राणां तुल्यवदेवाधिकारः सिध्यति। पुत्रेण लोकान् जयतीत्यादिवाक्येभ्यस्तुल्योपकारश्रुतेः। तत्पिण्डदानाविशेषात्। अतएव जीवत्पितृकयोः पौत्रप्रपौत्रयोरनधिकारः सिद्ध्यति। नजीवन्तमतिदद्यादिति श्रुत्या जीवन्तं पितरमुपक्रम्य तयोः पार्व्वणनिषेधादनुपकारकत्वात्। अन्यथा मृतपितृकयोरिव तयोरपि स्यात्। जननक्रमेण च सपिण्डानन्तर्य्यात्पुत्रस्यैव स्यात्, न पौत्रप्रपौत्रयोः। नच पुत्रादीनान्त्रयाणां युगपदधिकारप्रतिपादकं वचनमस्ति। तस्मादुपकाराविशेषादेव तुल्यवद्धनसम्बन्धोऽभिधेयः। एवञ्च सर्व्वत्रोक्तरीत्या मृतधनस्य मृतार्थत्वमनुसन्धेयमुक्तक्रमेण ॥ ० ॥

दार्ढ्याय पुनराह। तच्चेति। नियतक्रमाणामिति। तदभावे सकुल्यः स्यादिति। सर्व्वेषामप्यभावइति। अहार्य्यं ब्राह्मणधनमिति वचनानां मनुना क्रमेणैवाभिधानात् सकुल्यादीनां क्रमनैयत्यमितिभावः। अतएवेति। यतएव उपकारेणैव धनाधिकारिता, उपकारतारतम्याच्च धनाधिकारक्रमोऽतएवेत्यर्थः। तुल्यवद्विति। तथाच उपकारतार

तस्याभावात् न क्रमाधिकारः । किन्तु युगपदेवेतिभावः । तयोरपि स्यादिति । जीवत्पितृकयोरपि पौत्रप्रपौत्रयोः सम्बन्धाविशेषादधिकारः स्यादित्यर्थः । जननक्रमेण चेति । यज्जनमव्यवहितं यज्जननन्तदुत्तरन्तदधिकार इति क्रमस्य प्रयोजकत्वेन चेत्यर्थः । पौत्रप्रपौत्रयोर्मृतपितृकपौत्रप्रपौत्रयोः ।०॥

स चायमर्थोदायभागप्रकरणे पुत्रादीनामुपकारकत्वातिशयाभिधानस्यानन्यप्रयोजनकत्वात् । पितॄणामनृणश्चैव स तस्मात्सर्व्वमर्हतीत्यानृण्यकरणस्य धनलाभहेतुत्वेन कीर्त्तनात् ।

दौहित्रोपि ह्यमुत्रैनं सन्तारयति पौत्रवदित्यनेनापि धनसम्बन्धहेतुत्वेन निर्द्देशात्पुत्रादीनाञ्च त्रयाणां सन्तारणादन्यस्य तुल्यवद्धनसम्बन्धकारणस्याभावात् । त्रयाणामुदकमित्यादेश्चानर्थक्यापत्तेः क्लीवपतितजात्यन्धादीनाञ्चानुपकारकत्वादेवानंशित्वाभिधानस्योपपत्तेः । प्रतिसम्बन्धिनाञ्चाधिकारार्थं वचनकल्पनागौरवात् । तदर्जितधनस्य च तदुपकारतारतम्येन तादर्थ्यसम्पादनस्य न्याय्यत्वात् । उपकारकत्वेनैव धनसम्बन्धोन्यायप्राप्तो मन्वादीनामभिमत इति मन्यत इतिनिरवद्यविद्याद्योतेन द्योतितोयमर्थोविद्वद्भिरादरणीयः ॥०॥

चवनर्थइति । उपकारश्रमेणैव धनसम्बन्धोन्यायप्राप्त इत्येवंरूपोयमर्थः । मन्वादीनामभिमतइति मन्यते इति दूरेणापिमेणान्वयः । अत्र हेतुमाह । दायभागप्रकरण इत्यादि । उपकारकत्वातिशयाभिधानस्येति । यथाणामुद कज्ञार्य्यमिति पुत्रेण लोकान् जयतीत्यादिनेति शेषः । धन सम्बन्धहेतुत्वेनेति । सम्बारकत्वस्येत्यादि । आनर्थक्यापत्ते रिति । उपकारस्याप्रयोजकत्वे तत्प्रतिपादकवाक्यस्याना वश्यकत्वादिति भावः । क्लीवेति । क्लीवादीनामनधिकारस्य वाचनिकत्वे गौरवात् उपकारस्य प्रयोजकत्वे च उपकारा भावेन न्यायमूलकत्वे लाघवादिति भावः । प्रतिसम्बन्धिना मिति । जीवत्पितृकपौत्रप्रपौत्रादीनां सम्बन्धिनामित्यर्थः । वचनकल्पनेति । मृतपितृकादीनामिव तेषामपि पौत्रत्वाद्य विशेषादधिकारप्रसक्तौ तन्निषेधार्थमावश्यकं वचनकल्पना मन्मते तु उपकाराभावेन तदनधिकारस्य न्यायप्राप्ततया न वचनकल्पनेति भावः । अथैतासां स्मृतीनां न्यायमूलत्वे यद्यपि तद्भोग्यपार्व्वणदातरि तस्य गङ्गायामस्थिप्रक्षेपृगयायां पिण्ड दातुर्व्वोदासीनस्याधिकारापत्तिरित्यतआह ॥ ० ॥

अथाचापरितोषेविदुषां वाचनिकएवायमर्थः तथापि यथोक्तएव वचनार्थोग्राह्यइत्यस्तु किंवि

स्तरेणेति । ब्राह्मणधनवर्ज्जं राजा गृह्णीयात् ।

तदाह मनुः । अहार्य्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः । इतरेषान्तु वर्णानां सर्व्वाभावे हरेन्नृपः ॥ सर्व्वशब्देन ब्राह्मणपर्य्यन्तस्योपादानम् । वानप्रस्थयतिब्रह्मचारिणां धनन्धर्म्मभ्रातृसच्छिष्याचार्य्या गृह्णीयुः । तदभावे एकतीर्थी एकाश्रमी गृह्णीयात् ।

तदाह याज्ञवल्क्यः । वानप्रस्थयतिब्रह्मचारिणामृक्थभागिनः । क्रमेणाचार्य्यसच्छिष्यधर्म्मभ्रात्रेकतीर्थिनः ॥ प्रतिलोमक्रमेण यथासम्भवञ्च धनं ज्ञेयम् । ब्रह्मचारी च नैष्ठिकोऽभिमतः । पित्रादिपरित्यागेन यावज्जीवमाचार्य्यकुलनिवासपरिचर्य्ययोस्तेनकृतत्वात् । उपकुर्व्वाणस्य तु धनं पित्रादिभिरेव ग्राह्यमिति अपुत्रादिधनविभागः ॥०॥

अथात्रेति अत्र न्यायमूलत्वे विदुषामसन्तोषोऽतो वाचनिक एवार्थ इति यदि तथापीत्यर्थः । यथोक्त एव तद्भोग्यतद्देय पिण्डलेपदात्रादीनां आनन्तर्य्यक्रमेणाधिकारक्रम इत्येवंरूप एव वचनयोः त्रयाणामुदकं कार्य्यमिति अनन्तरः सपिण्डा इति वचनयोरर्थ इत्यर्थः । एवं सति च तदस्थिप्रक्षेप्त्रादेरु

शालीनस्य प्राग्धिकार इति भावः । ब्राह्मणधनवर्जं राजा धिकारीति प्रागुक्तार्थे प्रमाणमाह । ब्राह्मणेति । धर्मभ्राता भ्रातृत्वेनाभ्युपेतोऽपरो वानप्रस्थो गृह्णीयात् यथासंख्यक्रमेणे त्यर्थः । अत्र प्रमाणमाह । तदाहेति । अनुलोमक्रमस्य विव क्षितत्वे वानप्रस्थस्याचार्य्यासम्भवादाह । प्रतिलोमेति । धर्म भ्रात्रादिव्युत्क्रमेणेत्यर्थः तथाचाचार्य्याभावे एकतीर्थिन इति ग्रन्थकृत्सम्मतोऽत्र वचनार्थः । वस्तुतो धर्मभ्रातृपदं एकतीर्थि विशेषणमेव । अन्यथैतयोः पृथक्त्वे यथासंख्यक्रमानुपपत्तेरिति ध्येयम् यथासम्भवञ्चेति । तेन वानप्रस्थधनं सञ्चितनीवारादि यतिधनं कमण्डलुकौपीनादि ब्रह्मचारिधनम्पुस्तकवस्त्रादीनि । ब्रह्मचारी द्विविधः नैष्ठिक उपकुर्व्वाणश्च तत्र नैष्ठिकस्यैव धने आचार्य्यस्याधिकारोऽपरस्य तु धने तत्पित्रादीनां क्रमेणाधि कार इत्याह । ब्रह्मचारीचेति । कृतत्वात् सङ्कल्पितत्वात् । उपकुर्व्वाणस्य अकृततथासङ्कल्पस्याध्ययनसमाप्त्यनन्तरम्पितृ गेहनिवासाभिमुखस्य ॥ ० ॥

अथायं मृतपुंस्वाधिकारक्रमः । तत्र प्रथमं पुत्रः तद भावे पौत्रः तदभावे प्रपौत्रः मृतपितृकपौत्रमृतपितृपितामह कप्रपौत्रयोस्तु पुत्रेण सह युगपदधिकारः प्रपौत्रपर्य्यन्ताभावे पत्नी सा च प्राप्तभर्तृदाया भर्तृकुलन्तदभावे पितृकुलं वा समाश्रिता सती शरीररक्षार्थं भर्तृदायं भुञ्जीत । तथा ।

भर्तुरुपकारार्थं यथाकथञ्चिद्दानादिकमपि कुर्वीत नतु स्त्री धनवत्स्वच्छन्दं विनियुञ्जीत । तदभावे दुहिता तत्र प्रथमं कुमारी तदभावे वाग्दत्ता तदभावे चोढा सा च पुत्रवती सम्भावितपुत्रा च द्वे युगपदेवाधिकारिण्यौ । वन्ध्या विधवा च पुत्रहीना नाधिकारिणी । ऊढायाश्चभावे दौहित्रः तदभावे पिता तदभावे माता तदभावे भ्राता तत्रापि प्रथमं सोदरः तदभावे वैमात्रेयः मृतस्य भ्रातृसंसृष्टत्वे तु सोदरमात्रविषये प्रथमं संसृष्टसोदर एवाधिकारी तदभावे चासंसृष्टसोदरः । एवं वैमात्रेयमात्रविषये प्रथमं संसृष्टवैमात्रेयः तदभावे चासंसृष्टवैमात्रेयः । यदातु संसृष्टो वैमात्रेयः सोदरश्चा संसृष्टः तदा तावुभौ तुल्यवदधिकारिणौ । भ्रातृणामभावे भ्रातुः पुत्रः । तत्रापि प्रथमं सोदरभ्रातृपुत्रः तदभावे वैमात्रेय भ्रातृपुत्रः संसर्गे तु सोदरभ्रातृपुत्रमात्रविषये प्रथमं संसृष्ट सोदरभ्रातृपुत्रः । तदभावे चासंसृष्टसोदरभ्रातृपुत्रः वैमात्रेय भ्रातृपुत्रमात्रविषये प्रथमं संसृष्टवैमात्रेयभ्रातृपुत्रः । तदभावे चासंसृष्टवैमात्रेयभ्रातृपुत्रः । यदातु सोदरभ्रातृपुत्रोऽसंसृष्टो वैमात्रेयभ्रातृपुत्रश्च संसृष्टः तदा द्वौ भ्रातृवत्तुल्याधिकारिणौ । भ्रातृपुत्राभावे भ्रातृपौत्रः । तत्रापि भ्रातुः सोदरासोदरक्रमः संसर्गासंसर्गक्रमश्च बोध्यः । तदभावे पितृदौहित्रः सच सोदर भगिनीपुत्रः तदभावे वैमात्रेयभगिनीपुत्रश्च तदभावे पितुः

तद्भावे पितामहस्तद्भा
पितामही ।२

सहोदरः। तदभावे पितुर्वैमात्रेयः। तदभावे पितृसोदरपुत्र पितृवैमात्रेयपुत्रपितृसोदरपौत्रपितृवैमात्रेयपौत्राणां क्रमेणाधिकारः। तदभावे पितामहदौहित्रः तथापि पितृसोदरभगिनीपुत्रः पितृवैमात्रेयभगिनीपुत्रस्य वक्ष्यमाणप्रपितामहदौहित्राधिकारेप्येवं तदभावे पितामहः। तदभावे पितामही तदभावे पितामहसहोदरभ्रातृवैमात्रेयभ्रातृतत्पुत्रपौत्रप्रपितामहदौहित्राः क्रमेणाधिकारिणः। एतावत्पर्य्यन्तानां स्वनिर्भोग्यपिण्डदातॄणामभावे धनिदेयपिण्डदातॄणां मातामह (अत्र प्रथमं मातामहस्य तदभावे मातुलस्य) मातुलादीनामधिकारस्तदभावे धनिमातृस्वस्रीयस्याधिकारः तदभावे मातुलपुत्रपौत्राणां क्रमेणाधिकारः तदभावे चाधस्तनसकुल्यानां स्वनिर्भोग्यलेपदातॄणां प्रतिप्रणप्तृप्रभृतिपुरुषत्रयाणां क्रमेणाधिकारः तदभावे पुनरूर्द्धतनसकुल्यानां स्वनिर्देयलेपभुजां पिण्डदातॄणां वृद्धप्रपितामहादिसन्ततीनामासत्तिक्रमेणाधिकारः। तदभावे समानोदकानामधिकारः तेषामभावे चाचार्य्यस्य तदभावे शिष्यस्य तदभावे सहवेदाध्यायिब्रह्मचारिणोऽधिकारः। तदभावे चैकग्रामस्थसगोत्रसमानप्रवरयोः क्रमेणाधिकारः। उक्तपर्य्यन्तानां सर्व्वेषां सम्बन्धिनामभावे ब्राह्मणधनवर्जं राजा गृह्णीयात्। ब्राह्मणधनन्तु त्रैविद्यादिगुणयुक्ता ब्राह्मणा गृह्णीयुः। एवं वानप्रस्थधनं भ्रातृत्वेनानुमतोऽपरो वानप्रस्थ एकतीर्थसेवी गृह्णीयात्। तथा यतिधनं

वच्छिद्य: नैष्ठिकब्रह्मचारिणोधनमाचार्य्यः उपकुर्व्वाणस्य तु ब्रह्मचारिणोधनं पित्रादिर्गृह्णीयादिति संक्षेपः ॥ ० ॥

अथ संसृष्टधनविभागः ॥ तत्र मनुविष्णू। विभक्ताः सह जीवन्तोविभजेरन् पुनर्यदि। समस्तत्र विभागः स्यात् ज्यैष्ठ्यन्तत्र न विद्यते॥ समस्तत्रेति सवर्णभ्रातृसंसर्गाभिप्रायेण। ब्राह्मणक्षत्त्रिययोस्तु संसर्गे पूर्व्वोक्तभागानुसारेणैव भागव्यवस्था बोद्धव्या॥ ० ॥

अपुत्रधनविभागं निरूप्य संसृष्टधनविभागं निरूपयति। अथेति। संसृष्टधनेति। संसृष्टधनञ्च सामुदायिकस्वत्वमये पित्रादिभिः सह विभागानन्तरन्तेषाम्पुनरेकमत्या यत्तव धनन्तन्ममधनं यन्ममधनन्तत्तवेति व्यवस्थया प्राग्जात वैशेषिकस्वत्वविनाशेनोत्पन्नसामुदायिकस्वत्ववद्धनं। यत्र क्रमते तृक्रव्यवस्थया प्राग्जातवैशेषिकस्वत्वविनाशेनोत्पन्ना परिचितवैशेषिकस्वत्ववद्धनमिति बोध्यम्। विभागोनिरूप्यते इतिशेषः। सहजीवन्तः संसृष्टिनः सन्तः समस्तत्रेति सामान्यतोऽभिधानात्। संसर्गानन्तरविषमवर्णविभागेऽपि समत्वं स्यादित्याशङ्क्याह।समस्तत्रेतीति। उक्तार्थे प्रमाणमाह॥ ० ॥

पूर्व्वकृतज्येष्ठांशनिषेधमात्रपरं हि समवचनम्। अतएव बृहस्पतिः। विभक्ता भ्रातरो ये तु सम्प्रीत्यैकत्र संस्थिताः। पुनर्विभागकरणे तेषां ज्यैष्ठ्यन्न विद्यते। इति ज्येष्ठांशमात्रं निषेधयति। नतु भागसाम्यमेव बोधयति। संसर्गिणश्च बृहस्पत्युक्ताः।

विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः। पितृव्येणाथ वा प्रीत्या सतु संसृष्ट उच्यते॥ इति परिगणितव्यतिरिक्तेषु संसर्गकृतो विशेषो नादरणीयः। परिगणनानर्थक्यात्। अपरे च विशेषा भ्रात्रधिकारनिरूपणप्रकरणोक्ता अनुसन्धेयाः॥ इति संसृष्टाधिकारः॥

पूर्व्वकृतेति। हियस्मात्। ननु समविभागवचनस्य ज्येष्ठांशनिषेधकत्वे ज्यैष्ठ्यन्नचेति पुनर्वचनवैयर्थ्यापत्तिरतो विषमवर्णानामपि समविभागविधायकं समस्तचेति ज्यैष्ठ्यन्नचेति तु ज्येष्ठांशनिषेधकमित्येतदुक्तमिति चेन्न। तथासति विषमवर्णसाधारण्येन संसर्गिणां समोविभागः। तथा विंशोद्धारश्च तत्र नास्तीति वाक्यभेदापत्तेरतः समस्तचेति ज्येष्ठांशनिषेधकमेव एतच्च वर्णकृतविषमविभागनिरासाभिप्रायकत्वशङ्का निरासाय परं ज्यैष्ठ्यन्नचेति त्वनुवाद इत्येव युक्तमिति। वस्तुतस्तु समस्तचेति ज्येष्ठस्य द्व्यंशरूपविषमविभागनिवृत्त्यै

ज्येष्ठं तथेति तु विंशोद्धारनिवृत्त्यर्थं अन्यथा विंशोद्धारस्य भागवैषम्यासम्पादकतायाः प्रागभिहितत्वात् । समविभागाभिधानेपि तदापत्तेरभ्यस्यमानत्वादिति सानुवादकतेति सुधीभिर्बोध्यम् । अतएव स्मृत्यन्तरसम्वादन्दर्शयति । अत एवेति । यत एव न वर्णनिबन्धनविषमविभागनिषेधोऽत एव । ज्येष्ठांशमात्रन्निषेधयति बृहस्पतिरित्यन्वयः । ज्येष्ठांशस्यात्र ज्येष्ठत्वेनांशद्वयं सोद्धारांशस्येति द्वयं बोध्यम् । परिगणनासामर्थ्यादिति । तथाच परिगणितेतरेषां संसर्ग एव नेति भावः । अपरइति । अनुपघातार्जितमजेकस्यैव नेतरेषां अनुपघातार्जितविद्याधने तु समाधिकविद्यानामंशित्वं उपघातार्जिते तु सर्व्वेषामंशित्वमित्यादर्थोयं विशेषाभ्राचधिकार प्रकरणोक्तोऽस्तिऽचापि संसर्गविभागेप्यनुसरणीयादत्यर्थः ॥

अथविभागकाले निह्नुतस्य पश्चादवगतस्य विभागः ।

तत्र मनुः [illegible]ऋणे धनेच सर्व्वस्मिन् प्रविभक्ते यथाविधि । पश्चादृश्येत यत्किञ्चित्तत्सर्व्वं समतां नयेत् ॥ ० ॥

निह्नुतविभागन्निरूपयति ॥ यथेति ॥ निह्नुतस्यापि साधारणतया सामान्यतएव समभागस्य प्राप्तत्वेन समतां नयेदिति पुनस्तदभिधानस्य प्रयोजनं दर्शयति ॥ ० ॥

पूर्व्वं यथा यस्य विभागकल्पना कृता तत्समानैव कार्य्या न पुनरपहर्त्तुरपहृतं तयाऽल्पभागो दातव्यो न दातव्य एव वेति सम्मतं नयेदिति शब्दस्यार्थः। न पुनस्तत्र द्रव्ये सर्व्वेषां समभागार्थं वचनमिदम्। विंशोद्धारादिबाधे हेत्वभावात्। ब्राह्मणक्षत्रिया दीनाञ्च समभागापत्तेः।

तथाह याज्ञवल्क्यः। अन्योन्यापहृतं द्रव्यं विभक्तैर्य्यत्तु दृश्यते। तत्पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः॥

तथा कात्यायनः। प्रच्छादितन्तु यद्येन पुनरागत्य तत्समम्। भजेरन् भ्रातृभिः सार्द्धमभावे पितु तत्सुताः॥ अन्योन्यापहृतन्द्रव्यन्दुर्विभक्तञ्च यद्भवेत्। पश्चात्प्राप्तं विभज्येत समभागेन तद्भृगुः। असम्यग्विभक्तस्यापि पुनर्विभागन्दर्शयति॥ ७॥

पूर्व्वमित्यादि। यथायस्येति। यस्यापहर्त्तुरनपहर्त्तुर्वा यथा भागकल्पना द्व्यंशसमांशरूपभागकल्पना द्रव्यान्तरे कृता तथाऽपहृतद्रव्येऽपि कार्य्येत्यर्थः। हेत्वभावादिति। अपहर्त्तुरंशित्वात्पांशित्वनिरासकत्वेनैव वचनस्यार्थवत्त्वे विंशोद्धारादिविधिबाधकाभावादिति भावः। ननु विंशो

ज्ञुरादिना भागवैषम्यप्रयोजकत्वमिति प्रागेवाभिहितम् तथा च
तद्वाधानास्त्येव किन्तु ह्रासादिरूपविषमविभागनिवृत्त्यर्थमेव
समविधानं स्यादित्यत आह । ब्राह्मणेति । समभागापत्ते
रिति । सामान्यत एव विषमविभागनिषेधस्य भवन्मते वचना
र्थत्वादिति भावः । न चेष्टापत्तिः । उपकारतारतम्येपि भाग
साम्याभ्युपगमे न्यायविरोधापत्तेः । इदमुपलक्षणम् । तथा
प्युक्तक्रमेणैव वचनस्यार्थवत्त्वे चरियादौ विषमविभागविधीनां
बाधस्यान्याय्यत्वमित्यपि द्रष्टव्यम् । समैरंशैरिति । पूर्व्वकृतांश
समैरित्यर्थः । अभावेति । विभागिनोऽभावे । तत्सुतास्त
त्पौत्रपर्य्यन्ताः । तत्पश्चादितन्धनं भ्रातृभिर्भागयन्तरैः सह
समभजेरन्नित्यर्थः । अत्र संसृष्टिना पित्रा साधारणधनानु
पघातेन यत्स्वयमर्जितन्तद्विभक्तजपुत्रसत्त्वे तस्यैव नेतरेषाम् ।
अनीशः पूर्व्वजः पित्र्ये भ्रातृभागे विभक्तज इति । पुत्रैः सह
विभक्तेन पित्रा यत्स्वयमर्जितम् । विभक्तजस्य तत्सर्व्वमनीशाः
पूर्व्वजाः स्मृता इत्यादेः सङ्कोचकाभावादिति बोध्यम् । दर्शय
तीति । दुर्विभक्तञ्च यद्भवेदित्यनेनेति शेषः ॥ ० ॥

सकृदंशो निपततीति सम्यग्विभागविषयम् ।
पश्चात्प्राप्तमिति न पुनः पूर्व्वविभक्तमपि विभ
जनीयमित्यर्थः ।

तथा कात्यायनः। बन्धुनापहृतं द्रव्यं बलान्नैव प्रदापयेत्। बन्धूनामविभक्तानां भोगं नैव प्रदापयेत्॥ सामादिना दाप्यो न बलात्। अविभक्तेन तु यदधिकं भुक्तं तदसौ न दाप्यः। अत्र च साधारणधने परधनमप्यस्तीति तन्निह्नवे स्तेन एव भवति किल्विषी चेति ये मन्यन्ते तान् प्रत्युच्यते। यएव हि परस्येदमिति विशेषेण जानानः परस्वे स्वत्वहेतुमन्तरेणैव स्वत्वमारोपयति स स्तेन इति लोकप्रसिद्धोऽर्थः। न चात्रेदम्परकीयं इदं वा ममेति विवेक्तुं शक्नोति द्रव्यस्याविभक्तत्वात्॥ ०॥

सम्यग्विभागेति। सामान्यविशेषन्यायादित्यर्थः। सपूर्व्वविभक्तमपीति। धनसामान्यस्य पुनर्विभाज्यत्वे पश्चात्प्राप्तमिति विशेषापादानवैयर्थ्यापत्तेरिति भावः। भोगं नैव प्रदापये दित्यस्यार्थमाह। अविभक्तेनेति। साधारणधनापह्नवे चौर्य्यमेवेति केषाञ्चिन्मतमसङ्गात्तदभिधानपूर्व्वकं दूषयति। अत्र चेति। विशेषमिति। इतरव्यावृत्तपरकीयस्वत्ववत्तया जानन्नित्यर्थः। यएव हीति। हि यस्मात्परस्येदमिदमित्यादि। लोकप्रसिद्धोऽर्थो यतएवातएव न साधारणधनापहारे स्तेयनिष्पत्तिरिति दूरेणान्वयः। स्वत्वहेतुमन्तरेण

स्वामिकृतदानविक्रयादिकं विना स्वत्वमारोपयति स्वस्वत्वेच्छयोपादानङ्करोति तेन याचिताद्युपादानेन स्तैन्यन्तदुपादानस्य स्वत्वेच्छानधीनत्वात् स स्तेनइति । तथाचेदन्त्वेन परकीयत्वेन निश्चितंद्रव्यस्यापहारः स्तैन्यमित्यर्थः । विशेषं जानन्नित्यच प्रमाणमाह । लोकेति । अतएव स्वकीयत्वभ्रमेण परस्वं गृह्णात्यपि पुरुषेन लोकानां स्तेयव्यवहारइति । प्रकृते च साधारणे इदन्त्वेनपरकीयत्वज्ञानासम्भवं दर्शयति । नचाचेति । ननु स्वकीयत्वभ्रमेणापादाने स्तेयव्यवहाराभावात् । परकीयत्वेन ज्ञानमपेक्षितमस्तु नत्विदन्त्वेन परकीयत्वज्ञानम्प्रमाणाभावात् । तथाच साधारणधनेऽपि परकीयत्वज्ञानमुस्त्येवेति तदपहारः स्तेयं स्यादेवेत्यतइदन्तया परकीयत्वज्ञानस्यापेक्षितत्वं दृष्टान्तेन साधयति ॥ ० ॥

तद्यथा । यदैव हि ममेदमिति विशेषं जानानः परस्वत्वापत्तये स्वामी त्यजति परश्च विशेषेणेदं ममेति स्वत्वं प्रत्येति तत्रैव दाननिष्पत्तिः । नच साधारणधने तथा सम्भवतीति साधारणधनमदेयमुक्तम् । तथास्तेयमपि नैतन्ममधनम्परस्येदमिति जानतएव भवतीति न साधारणधनापहारे स्तेयनिष्पत्तिः । अपहारपदन्तु सङ्गोपनाभिप्रायम् ।

मच सङ्गोपनं स्तेयमुक्तम्। असङ्गुप्तहरणेपि स्तेय पदप्रदर्शनात्।

तथा कात्यायनः। प्रच्छन्नं वा प्रकाशं वा निशायामथवा दिवा। यत्परद्रव्यहरणं स्तेयन्तत्परिकीर्त्तितम्॥ अतएव राज्ञा बलाद्दाप्यइति पूर्व्वमुक्तम्। चौरत्वेतु चौरं प्रदाप्यापहृतं घातयेद्विविधैर्व्वधैरिति वचनादास्तां सामादिना दापनं घातनमपि कार्य्यम्। एतच्च मुनिभिरपहर्त्तुरपि विभागदान प्रतिपादनादुन्नीयते ॥ ० ॥

तद्यथेति। इदं ममैतीति। इत्यनेन स्वीकारेण दातुस्त्यागादुत्पन्नस्वत्वमस्त्येतीत्यर्थः। तथा सम्भवतीति। इति हेतोः साधारणमदेयमुक्तमित्यर्थः। नचात्रापि प्रमाणाभावः। अविभक्तधने हि स्वत्वं गुटिकापाताभिव्यंग्यमेव। तथाचास्मिन् भागे यदि मम गुटिकापातो न स्यात्तदा नैतन्मम धनन्तत्कथन्दाननिष्पत्तिरिति शङ्कया तत्राप्रवृत्तेरदेयत्वस्य युक्तिसिद्धत्वात्। तथा स्तेयमपीति। यथा इदन्त्वेन जानत एव दाननिष्पत्तिस्तथा परस्वमिदमिति जानत एव स्तेयम्भवतीत्यर्थः। ननु तर्हि कथं साधारणापह्नवे स्तेयशब्दस्यापहारपदस्य प्रयोगो मुनीनामतआह। अपहारपदन्त्विति। सङ्गोपनेति।

वस्तुनो ज्ञानसामग्रीविघटनव्यापाररूपे सङ्गोपने साधारणत्व मित्यर्थः। ननु सङ्गोपनं स्तेयमेव तत्कथं स्तेयत्वेत्याशङ्क्य निषेधति। नहीति। प्रच्छन्नमाच्छादितमप्रकाशमनाच्छादितमेव सङ्गोपनाभावः परद्रव्यहरणं स्वत्वेच्छया परद्रव्यापादानम्। अतएवेति। यतएव साधारणापह्नवेन स्तेयमत एवेत्यर्थः। चौरत्वेत्विति। साधारणापह्नवकर्त्तुरित्यादिः। एतच्चेति। उक्तरूपस्तेयलक्षणञ्चेत्यर्थः। विभागप्रतिपादनादिति। साधारणधनापहारस्य स्तेयत्वेऽशीतिरक्तिकाऽन्यून साधारणसुवर्णापहर्त्तुर्महापातकित्वेन पतितत्वात्। तद्भागाप्रसक्तेस्तत्साधारण्येन विभागप्रतिपादनानुपपत्तेरिति भावः। उक्तार्थे संवादन्दर्शयति ॥०॥

अतएव तदुक्तं विश्वरूपेणापि तस्करदोषो नास्तीति वचनारम्भसामर्थ्यात् स्तेयधात्वर्थानिष्पत्तेरित्यभिप्रायः। अतएव प्रायश्चित्तकाण्डे जितेन्द्रियेण भणितम्। यदि स्वर्णमेव परकीयं लौहादिबुध्या गृह्णाति असुवर्णं सुवर्णबुध्यात्मीयसदृशम्परकीयमेवात्मीयबुध्या गृह्णाति सर्वत्र नापहारनिष्पत्तिः सर्वत्र यथावस्तुपरकीयबुद्धेरभावात्॥०॥

तदुक्तमिति । तस्करदोषो नास्तीति । तस्करस्य दोषस्त स्करत्वमेव नास्तीत्यर्थः । ननु तदपहारस्य स्तेयत्वेपि विभा गोवचनबलादेव भविष्यतीत्याशङ्कामपनयन् विशेषकपक्षा श्रयमाह । स्तेयधात्वर्थेति । इदन्तया परकीयत्वेन निश्चित परद्रव्यापहार एव स्तेयधात्वर्थः । अन्यथा साधारणापह वस्य स्तेयत्वे लोकव्यवहारविरोधो विभागस्य वेदमूलकत्व कल्पना च स्यादिति तदभिप्रायः । अत्रैवोपष्टम्भकान्तरमाह । अतएवेति । नापहारनिष्पत्तिरिति । न कामकृतसुवर्णा पहारनिष्पत्तिरित्यर्थः । यथावस्थितेति । यद्रूपावच्छिन्नं वस्तु ग्राह्यन्तद्रूपेण परकीयत्वबुद्ध्यभावादित्यर्थः । तथाच ग्राह्यत्वेच्छाविषयतावच्छेदको यो धर्मः तद्रूपेण परकीयत्व निश्चयाधीनतद्रूपावच्छिन्नपरद्रव्यापहार एव कामकृततदप हारः । प्रकृतेच प्रथमे लोहबुद्ध्या सुवर्णं गृह्णतो न कामकृत सुवर्णापहारः सुवर्णस्य ग्राह्यत्वेच्छाविषयतावच्छेदकत्वाभा वात् । तद्रूपेण परकीयत्वज्ञानाभावाच्च । नापि कामकृत लोहापहारः लोहत्वस्य तादृशेच्छाविषयतावच्छेदकत्वेऽपि वस्तुतः तद्रूपावच्छिन्नापहाराभावात् । किन्त्वकामकृत सुवर्णापहार एव । द्वितीये चासुवर्णं सुवर्णबुद्ध्यापहरन्नपि सुवर्णापहारः वस्तुतः तद्रूपावच्छिन्नापहाराभावात् । किन्त्व ज्ञानात् सुवर्णापहार एव तद्गतस्य पित्तलत्वादेस्तादृशेच्छा

विषयतावच्छेदकत्वाभावात् । तृतीयेपि स्वकीयत्वभ्रमेणैव परकीयं गृह्णतोपि कामाश्च तदपहारः परकीयत्वेन ज्ञाना भावादिति पर्य्यवसितोऽर्थः ॥ ० ॥

तद्वदत्रापि समानम् । विभागात्पूर्व्वं तद्धनस्यैक देशविशेषगतस्वत्वस्यापरिज्ञानात् । अतोनाच स्तेयनिष्पत्तिः। सत्यपि वास्तेयेऽपहर्त्तुरपि विभाग वचनदर्शनात् न स्तेयदोषः। अन्यथा सुवर्णादि निह्नवे पतितस्य भागोनस्यात् ॥ ० ॥

तद्वदिति । तदुक्तवदित्यर्थः । इहापि साधारणधनेपि । समानमिति । तत्र यथालौहबुद्ध्या गृह्णतोग्राह्यत्वेनेच्छा विषयतावच्छेदकलौहत्वेन ज्ञानेपि सुवर्णत्वेन ज्ञानाभावात्। असुवर्णापहारेच विशेष्यस्य सुवर्णापहारस्यैवाभावात् स्वकीय वित्तबुद्ध्या परकीयं गृह्णतः परकीयत्वेन ज्ञानाभावात् न कामकृततदपहारनिष्पत्तिः। ग्राह्यत्वेनेच्छाविषयतावच्छेद कसुवर्णत्वादिना परकीयत्वज्ञानाभावात् । तथेहापि ग्राह्य तया इच्छाविषयतावच्छेदकेनैतत्सुवर्णत्वादिना परकीयत्व ज्ञानाभावात् नापहारनिष्पत्तिरित्यर्थः । ननु परकीय द्रव्यापहारएव स्तेयं लाघवात्परकीयद्रव्यापहर्त्तृत्वेव

स्तेनत्वेन लोकव्यवहारप्रवृत्तेश्च। अत एव स्तेयधात्वर्थोऽपि स एव तदेव च स्तेयं अपहर्त्तव्यतावच्छेदकप्रकारेण परकीयत्वज्ञान पूर्व्वकस्य तदा कामकृतम्। एवञ्च सति विश्वरूपेण तस्कर दोषोनास्तीत्यनेन तस्करत्वनिबन्धनो यो दोषः पातित्यादि रूपदोषस्तद्राहित्यमेवोक्तन्तु स्तेयत्वानिष्पत्तिरित्युक्तम्। अत एव स्तेयधात्वर्थानिष्पत्तिरिति तदभिप्रायवर्णनमयुक्तमेवपा तित्यादिदोषराहित्यस्यैव तदभिप्रेतत्वात्तथाजितेन्द्रियेणापि यथा वस्तुपरकीयबुद्ध्यभावादित्यनेनापहर्त्तव्यतावच्छेदकप्र कारेण परकीयत्वज्ञानपूर्व्वकतद्रूपावच्छिन्नपरद्रव्यापहारः कामकृतस्तेयमित्यभिहितम्। नन्विदन्त्वादिना परकीयत्वज्ञान पूर्व्वकत्वन्नास्तीत्यस्तु मास्ति साधारणेऽपि सुवर्णादावपहर्त्तव्ये एतत्सुवर्णसमुदायमध्ये सुवर्णं परकीयमप्यस्तीति अपहर्त्तव्य तावच्छेदकसुवर्णत्वादिना परकीयत्वज्ञानमावश्यकं समुदाये स्वस्वाम्यव्यतिरेकनिश्चयादन्यथापहर्त्तव एव कुत इति साधारण स्यापहारे स्तेयत्वमेवेति तत्कथं साधारणधनापहारेण स्तेय निष्पत्तिरित्यभिहितमित्यत आह। यद्यपि वेति। स्तेयत्वा भ्युपगमायमुक्तः साम्प्रदायिकमतावष्टम्भेन। वस्तुतस्तु अत्र न स्तेयनिष्पत्तिरित्यर्थे स्वयं वक्ष्यते न स्तेयदोषेण स्तेयनिबन्ध नपातित्यादिदोषः॥ ०॥

अथ पातकहेतुसुवर्णापहारेऽपि स्तेनस्य भाग इति विशेषवचनाभावात् । द्रव्यान्तरस्तेयविषयो भागविधिर्वर्ण्यते । एवन्तर्हि सुवर्णादिस्तेयनिषेध एव किमित्यसाधारणपरकीयमात्रद्रव्यगोचरेण व्यवस्थाप्यते । तथापि किं विनिगमनाप्रमाणमिति चेत् । उच्यते । परद्रव्यहरणं स्तेयमिति परशब्दा दात्मीयत्वव्यवच्छेदेनैव परकीयत्वस्यावगमात्सा धारणासाधारणयोरसाधारणस्यैव शीघ्रप्रतीतेः ॥०॥

नन्वेवम्पातित्यश्रुति परिमितसुवर्णापहारस्य हेतुतायां साधारणसुवर्णापहारभेदनिवेशे गौरवमतदुत्तरन्तदपहर्त्तुः पातित्यमेवेष्टं विभागविधिस्तु तदतिरिक्तसाधारणद्रव्यापहार विषय इत्याशङ्कते । अथेति । विशेषवचनेति । तत्सद्भावेतु तद्द चनेनैव पातित्यकारणतायां साधारणतदपहारभेदं निवेशः स्यादिति भावः । प्रतिबन्दिना समाधत्ते । एवं तर्हीति । किमितीति । न व्यवस्थाप्यतेत्यन्वयः । तथाच विभागविधेर्द्र व्यान्तरस्तेयविषयतया सङ्कोचः । किम्वा सुवर्णस्तेयनिषेध विधेः परमात्मीयसुवर्णस्तेयविषयतया सङ्कोचइत्यत्र विनि गमनाविरह इतिभावः । किं विनिगमनेति । विनिगमनाभावे

द्वयोरेव सत्त्वे साधारणसुवर्णापहर्त्तुरपतितत्वेपि विभागा प्राप्तिर्विभागविधिर्द्रव्यान्तरस्तेयविषयत्वेन सङ्कोचितत्वात्। असङ्कोचेतु तादृशपतितस्य विभागप्राप्त्यापतितस्य विभाग निषेधविधिविरोधः स्यादितिभावः। साधारणापह्नवे स्तेयत्व मस्त्येव द्वयोः सङ्कोचे विनिगमनाविरहः अस्यास्तेयत्वे तु न विनिगमनाविरहः द्वयोरेव सङ्कोचादित्यभिप्रायेण स्तेय निष्पत्तिरेवात्र न भवतीति समाधत्ते। उच्यतइति। स्तेय मित्यनन्तरं शास्त्रमिति तदन्तर्गतादिति च पदद्वयं पूरणी यम्। तथा च यत्परद्रव्यहरणन्तत्स्तेयमिति शास्त्रान्तदन्तर्ग तात्परशब्दात्परशब्दसमभिव्याहृतद्रव्यशब्दादित्यर्थः। आ त्मीयत्वेति। आत्मस्वत्वेत्यर्थः। व्यवच्छेदेनेति। तृतीया विशेषणे। तथाचात्मीयत्वव्यवच्छिन्नस्य परकीयत्वस्य परस्वत्वविशिष्टस्या वगमादित्यर्थः। एतस्यावगमे हेतुतामाह। साधारणेति। साधारणन्तत्तदितरसम्बन्धि। असाधारणन्तन्मात्रसम्बन्धि। तयोर्मध्ये तत्सम्बन्धिबोधकशब्दात्तन्मात्रसम्बन्धिन एव प्रथमो पस्थितिर्यतोऽतइत्यर्थः। अत्र दृष्टान्तमाह॥०॥

यथेष्टिपूर्व्वकमेवाद्ः पौर्णमासं हविरिति अग्नी षोमीयपुरोडाशस्यैवोत्कर्षः। नोपांशुयाजी याज्यस्य अग्नीषोमीयानग्नीषोमीयस्य साधारणत्वात्। अत

एवं लोकेऽपि नैवंविधविषये कश्चिद्विनिगमनादिकं
दृश्यते। अतोयद्वालकवचनम्। यथा मुद्गापचारे
माषप्रतिनिधौ मुद्गानां माषाणाञ्च यज्ञसम्बन्धे
अयज्ञिया वै माषा इति माषा निषिद्धाः। तथा।
आत्मीयानात्मीयहरणेऽपि अनात्मीयापहारो
निषिद्धः ॥०॥

यथेष्टेति। पौर्णमासी कर्त्तव्या अग्नीषोमीययागसम्बन्धित्व
विद्धिविधपुरोडाशरूपं आज्यरूपञ्च पूर्व्वमसाधारणमग्नी
षोमीयमात्रत्वात्। उत्तरञ्च साधारणमग्नीषोमीयतदन्योभ
युयागसम्बन्धित्वात्त्रेष्टिविशेषदृष्टिपूर्व्वकमेवादः पौर्णमास
हविरित्यनेन पौर्णमासहविषइत्युत्तरकालकर्त्तव्यत्वरूपमु
त्कर्षविधानं सचायमुत्कर्षः। पुरोडाशस्यैवासाधारणत्वेन
पौर्णमासपदात् शीघ्रोपस्थितेः नत्वाज्यस्य साधारणत्वात्।
मद्विदृष्टापीत्यर्थः। तथाच परमात्रस्वत्वान्नयद्रव्यापहारस्यैव
स्तेयत्वेन शास्त्रबोधितत्वात्। न साधारणापहारे स्तेयनिष्प
त्तिरिति भावः। अतएव स्तेयानिष्पत्तेरेव। एवं विधविषये
साधारणापह्नवे इदञ्च सामुदायिकस्वत्ववादिमतमाश्रित्य
समाहितं। स्वमते तु स्वत्वस्य प्रादेशिकत्वादेतावता प्रयासेना
प्यन स्तेयनिष्पत्तिर्दुर्व्वारैव। परमते स्वत्ववद्द्रव्यस्यापहृतसमु

दायमध्ये यस्मादिति बोध्यम्। एव वाक्यमतद्भूयवितुमुपन्यस्यति। अतद्गति। वक्ष्यमाणहेतोरित्यर्थः। यथेति। मुद्गापचारे मुद्गाभावे। माषप्रतिनिषेधो माहत्यवचनेन माषप्रतिनिधौ प्राप्ते मुद्गानां माषाणाञ्च यज्ञसम्बन्धे मुख्यकल्पानुकल्पभावेन यज्ञसम्बन्धप्रसक्तौ अयज्ञिया वै माषा इत्यनेन यथा माषानिषिद्धास्तथा चात्मीयामात्मीयापहारेपि आत्मीयञ्च तदनात्मीयं अन्यदीयञ्चेति साधारणमित्यर्थः। तदपहारेपि अनात्मीयापहारे अनात्मीयापहारनिषेधबोधको विधिः परस्वं नाददीतेत्येवं रूपः निषिद्धोनिषेधकइत्यर्थः। तथाचायम्पर्य्यवसितोर्थः। मौद्गश्चरुर्भवतीति श्रुतिः। तस्याश्चावघातादिविधिपर्य्यालोचनेनावयवपर्य्यन्तपर्य्यवसाने मुद्गावयवैश्चरुर्भवतीत्येवार्थः। मुद्गावयवाश्च द्विविधामुद्गमात्रारम्भकाः मुद्गमाषोभयारम्भकाश्च द्विविधानां यज्ञसम्बन्धोऽवगतः तत्र च मुद्गाभावे माषस्य प्रतिनिधित्वेन यज्ञसम्बन्धप्रसक्तौ अयज्ञिया वै माषा इत्यनेन माषावयवा माषमात्रारम्भकाः साधारणावयवामाषगतामाषमुद्गोभयारम्भकाश्च साधारणावयवा अपि यथा निषिद्धाः माषावयवत्वपुरस्कारेणैव सामान्यतोनिषेधात्तथा परस्वं माददीत इतिपरस्वत्वपुरस्कारेणैव निषेधात्। परमात्मीयस्वपरसाधारणस्य चापहारो निषिद्ध इति। अस्य च सामुदायिकस्वत्ववादितया न द्रव्यस्य स्वपरसाधारण्यानुपपत्तिरिति बोध्यम्॥ ० ॥

तद्दात्त्ववचनमेव। पूर्व्वव्याहृतस्य स्तेयपदार्थस्यैवाभावात्। माषगतमुद्गावयवोपादानेऽपि माषाणां यज्ञसम्बन्धो नास्तीति न शक्यते वक्तुम्। माषमिश्रितानामेव यज्ञसम्बन्धप्रतानः॥ इत्यन्योन्यापहृतविभागः॥०॥

दूषयति। तद्दात्त्वेति। पूर्व्वव्याहृतस्य पूर्व्वोक्तप्रबन्धेन प्रतिपादितस्य। स्तेयपदार्थस्य स्तेयलक्षणस्य परमात्मीयद्रव्यापहारलक्षणस्याभावात्। साधारणपक्षेऽभावात्। तथाच स्तेयस्यैव निषेधविषयतया साधारणपक्षे न निषिद्ध इतिभावः। दृष्टान्तासिद्धिमाह। माषगतेति। माषाणां माषमात्रारम्भकावयवानां वक्तुन्न शक्यते कुतस्तत्राह। माषमिश्रितानामेवेति। माषमात्रारम्भकावयवमिश्रितानामेवेत्यर्थः यज्ञसम्बन्धप्रतीतेः यज्ञसम्बन्धप्रसक्तेः। तथाचायज्ञिया वै माषा इति वाक्येन माषमात्रारम्भकावयवा एव निषिद्धाः नतु माषमुद्गोभयारम्भकावयवा इति तथात्वे मुद्गोपादानेऽपि तेषामपरिहार्य्यत्वाद्विधिविप्लवापत्तेः। परन्तु माषगतमुद्गावयवोपादाने माषमात्रारम्भकावयवानामप्यपरिहर्त्तव्यत्वेन उपादानस्यावश्यकत्वात्। तेषामपि यज्ञसम्बन्धः स्यादित्यतो माषगतमुद्गावयवानां नोपादानमित्येवेति क दृष्टान्तावकाशः प्रकरणान्तरमप्याह॥०॥

॥ अथ वृत्तविभागसन्देहनिर्णयः ॥

तत्र नारदः। विभागधर्मसन्देहे दायादानां विनिर्णयः। ज्ञातिभिर्भागलेख्येन पृथक्कार्य्यप्रवर्त्तनात्॥ ज्ञातीनां कीर्त्तनन्तेषु सत्सु नान्यसाक्षिग्रहणमित्येतदर्थम्।

अतएव याज्ञवल्क्यः। विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः। विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतुकैः। प्रथमं ज्ञातयः सपिण्डाः साक्षिणः। तदभावे बन्धुपदोपनीताः सम्बन्धिनः। तदभावे उदासीना अपि साक्षिणः॥ तुल्यवद्भावे साक्षिपदेनैवोपात्तत्वात् ज्ञातिबन्धुपदानर्थकतापत्तेः।

अतएव शङ्खः। गोत्रभागविभागार्थे सन्देहे समुपस्थिते। गोत्रजैश्चापरिज्ञाते कुलं साक्षित्वमर्हति। गोत्रजैर्ज्ञातिभिरित्यर्थः। तैरज्ञाते कुलबन्धुः साक्षित्वमर्हति। न पुनरसम्बन्धी। तेनाप्यपरिज्ञाते अन्यः साक्षीत्यर्थः॥ ०॥

अथेति॥ वृत्तः प्रागजातो विभागस्तस्य सन्देहे वृत्तं विभक्तानवेति सन्देहे। वक्ष्यमाणप्रकारेण निर्णय उच्यत इत्यर्थः। विभागधर्मेति। विभागरूपो यो धर्मस्तत्सन्देहे दायादानां

ज्ञातिभिरित्यादिहेतुभिर्निर्णय इत्यर्थः । भागलेख्येनेति । विभागपत्रेणेत्यर्थः । भोगलेख्येनेति पाठे समाहारद्वन्द्वः । तेन प्रत्येकवस्तुषु प्रत्येकमसाधारणभोगेन लेख्येन वा इत्यर्थः । पृथक् स्वातन्त्र्येण परस्परानुमतिनैरपेक्ष्येण यागादिकार्य्ये प्रवर्त्तनादित्यर्थः । अतएव ज्ञातिसत्त्वेऽन्यसाचिग्रहणस्य निषिद्धत्वादेव । विभागभावनाविभागनिष्पत्तिः यौतकैः पृथग्भूतैः युमिश्रणे इति धात्वनुसारात् । ननु ज्ञातिबान्धवादीनां द्वन्द्वनिर्देशात्तुल्यवदेव साक्षित्वं स्यात् तत्कथमप्रथमं ज्ञातय इत्यादिव्याख्यानमत आह । तुल्यवद्भावइति । अनर्थकतापत्तेरिति । साक्षिभिर्लिखितैरिति सामान्याभिधानेनैवोक्तार्थसिद्धेरिति । क्रमेणैव तेषां साक्षित्वार्थं ज्ञात्यादीनां पृथगुपादानमिति भावः । गोत्रेति । गोत्रस्य भागोधनन्तस्य विभागरूपेऽर्थे सन्देहे इत्यर्थः । न पुनरसम्बन्धिकुले साक्षिणि सतीत्यादिः ॥०॥

अतएव मुख्यभूताज्ञातयएव नारदेन निर्द्दिष्टाः । ज्ञातिभिरिति पाठोऽनाकरः । तथा लिखितेन वा निर्णयः । लिखितन्तु साक्षिभ्योबलवदेवेत्युक्तम् । तथा पृथक्कार्य्यप्रवर्त्तनादपि निर्णयः ।

यथोक्तं नारदेन । दानग्रहणपश्वन्नगृहक्षेत्रपरिग्रहाः । विभक्तानां पृथग्ज्ञेयाः पाकधर्म्मागम

व्यथाः॥ साक्षित्वं प्रातिभाव्यञ्च दानं ग्रहणमेव च। विभक्ता भ्रातरः कुर्य्युर्नाविभक्ताः परस्परम्॥ येषामेताः क्रियालोके प्रवर्त्तन्ते स्वरिक्थतः। विभक्ता नवगच्छेयुर्लेख्यमप्यन्तरेण तान्॥

तथा वृहस्पतिः। साहसं स्थावरं न्यासः प्राग्विभागश्च रिक्थिनाम्। अनुमानेन विज्ञेयं नष्टानामपत्रसाक्षिणौ॥ बलानुबन्धव्याघातं चोढं सार्व्व सभावकम्॥०॥

नारदेनेति। भ्रातृभिर्भागलेख्येनेत्यादि नारदेन निर्दिष्टा इत्यर्थः। भ्रातृभिरिति। मनुवचने गोत्रजैरित्याद्ये त्यादिः। नारदवचने भागलेख्येनेत्यस्यार्थमाह। तथा लिखितेन वेति। वक्ष्यवदिति। साक्षिभ्यो लिखितं गुर्विति वचना दिति शेषः। पृथक्कार्य्येति। पृथगुपादानादिकार्य्यप्रवर्त्तना दित्यर्थः। परिपत्ताः परिवारा दासादयः। प्रतिपत्त्यर्थमि त्यचेत्यनेन पौनरुक्त्यापत्तेः। पृथक्क्रियाः प्रत्येकं स्वातन्त्र्य विषयाः शेषाः। पाकधर्म्मो वैश्वदेवादि कर्म्म। आगमोधना गमनोपायः क्रयादिः। व्ययोधनवियोगः। प्रातिभाव्यं समवर्त्त स्वरिक्थतः। लेख्येति। इतरप्रमाणसामान्योपलक्षणम्। साक्ष्यमन्यासमवक्रियमाणमोरित्यादि। तथाच नारदः।

यत्र या क्रियते कर्म यत्किञ्चिद्दलदर्पितैः । तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते ॥ मनुष्यमारणं चौर्य्यं परदाराभिमर्षणम्। पारुष्यमनृतञ्चेति साहसम्पञ्चधा स्मृतमिति॥ स्थावरं स्थावरगततदीयत्वम्। न ख्यातामिति । पत्रसाक्षिणोरभावे साहसादयोऽनुमानादिना निर्णेया इत्यर्थः । साहसादीनामनुमानेन क्रमेण लिङ्गान्याह । बलानुबन्धेत्यादि । बलानुबन्धो बलवत्प्रयुक्तचेष्टाविशेषः। व्याघातः ताडनचिह्नं। होढो लोप्त्रम्। तत्सर्व्वं साहसस्य भावकं ज्ञापकमित्यर्थः ॥ ० ॥

स्वस्य भोगः स्थावरस्य विभागस्य पृथग्धनम्। पृथगायव्ययधनाः कुसीदञ्च परस्परम्॥ वणिक्पथञ्च ये कुर्य्युर्विभक्तास्ते न संशयः। एको भ्राता ददाति अपरश्च गृह्णाति। गृहादिकमायव्ययस्थितिश्च पृथक्पृथक्। एकेन ऋणादिषु क्रियमाणेषु अपरस्य साक्षी क्रियते प्रतिभूर्वा क्रियते परस्परञ्चा ऋणादिकव्यवहारः एको यत्किञ्चिद्द्रव्यमन्यतः क्रीत्वा वाणिज्यार्थं भ्रातरि विक्रीणीते। एवमादिका एकैकापि क्रियापरस्परं विभक्तानामेव सम्भवति। तथा विभागानुमानन्धीमद्भिरनुसन्धेयमिति। नतु येषामेताः क्रिया इति। एतच्छब्देन वक्तीनामुपा

दानात् मिलितानामेव गमकत्वं वाच्यम्। न्यायमूलत्वाद्वचनानाम्। एकैकचापि च न्यायस्याविशेषात्। नस्यातामपि साक्षिणावित्यनेन पञ्चसाक्षिणोरभावेऽनुमानमनुसरणीयमित्युक्तम् ॥ ० ॥

आवरे तदीयत्वलिङ्गान्याह। स्वस्येति। स्वस्य स्वस्वामिकस्याचरस्य पृथग्भोगरत्यर्थः। विभागलिङ्गान्याह। पृथग्धनमिति पृथगायव्ययधनाः पृथग्धनाय व्ययाः। कुसीदं ऋणादानमपरस्परमित्यर्थः। दानग्रहणेत्याद्युक्तवचनानि व्याकरोति। एको भ्रातेत्यादि। इदन्दानग्रहणेत्यस्य विवरणम्। पृथक्चेत्यस्य विवरणम्। गृहादिकमिति। आयेति। धनस्येतिशेषः। एकेनेति। इदं साक्षित्वं प्रातिभाव्यमित्यस्य विवरणम्। कुसीदमिति विवृणोति। परस्परं वेति वणिक्पथस्येत्यस्यार्थमाह एकदृति। विभक्तानामेवेति। एतेनोक्तक्रियासु विभागस्य व्याप्तिर्दर्शिता। न्यायमूलत्वादिति। न्यायो व्याप्तिस्तन्मूलत्वात्। वचनानां विभागलिङ्गवचनानाम्। एकैकचापीति। तारतम्याविशेषव्याप्तिस्तस्याः प्रत्येकक्रियात्वे वा विशेषात्तस्मादित्यर्थः। तथा च प्रत्येकमेव व्याप्यत्वात्। प्रत्येकमेव गमकत्वं न तु मिलितानां वचनानामपि तथैवाभिप्रायोऽन्यथा धूमालोकादीनामपि मिलितानां मिलितवत्स्यादिति गमकताशङ्की

कुरुते इतिभावः। इदमुतिवचने न स्यातामित्यादेरर्थमाह। नस्यातामिति ॥०॥

नाचार्य्यगौरवपराहतदायभागतत्वप्रबोधज्ञान रञ्जनमत्र शक्यम्। किन्तु प्रमाणपरतन्त्रधियां मुनीनां संवादमात्रकृतये कृतिनः प्रयत्नः ॥ बहु विधपूर्व्वनिबन्धव्याख्यासंजातसंशयस्यैतत्। जीमूतवाहनकृतम्प्रकरणमपनुत्तये ध्येयम् ॥ इतिपारिभद्रीयमहामहोपाध्यायश्रीजीमूतवाहनकृतौ धर्म्मरत्ने दायभागः समाप्तः ॥०॥ शुभमस्तु ॥०॥

नाचार्य्येति। आचार्य्याणां श्रीकरमिश्रादीनां गौरवेण पराहतो दूरीभूतो दायभागतत्त्वस्य प्रबोधो यथार्थज्ञानं येषां तेषां जनानां रञ्जनमनुरञ्जनमत्रानेन ग्रन्थेन न शक्यन्तर्हि विफलोऽत्र प्रयत्न इत्यत आह। किन्त्विति। प्रमाणं वेदादि तत्परतन्त्रास्तदधीनाधीर्येषान्तेषां मुनीनां संवादः परस्पर वचनाविरोधः तन्मात्रकरणे तन्मात्रार्थं कृतिनोयमप्रयत्न इत्यर्थः। सर्व्वेषामेव मुनीनां वेदार्थमवेदवचनानाम्परस्पर विरोधाभावात्। तद्वचनानामपि विरोधाभावात्तद्वचनेऽपि विरोधाभावस्यैव। आपाततः प्रतीयमानतद्विरोधोन्यायवचि

यत्नेनानेन तेषां तात्पर्यार्थविशेषमवधार्य्य परिपत्कृतेयदि तदाऽनेनैवाख्याकस्य यथार्थत्वेऽविवेचकानुरञ्जनकारि त्वकरत्वादिति भावः। मनीषायस्मादिति पाठे प्रमादवर्त्तिना न्तिष्टमादरकरणाय तैः स्वयमप्यालोचनाय तन्निर्णीतत्वात् मनीषिभिरपि तद्देवोपनिबद्धमिति। तेषामेतत्प्रदर्शनार्थमेव प्रयत्न इत्यर्थः ॥०॥ येन्दु भवाब्धिर्व्यंगरेकवेदु ख्याता वरदे परदेवतान्तु। धीमद्गुरुले खलु दायभागे श्रीकृष्णविप्रोविहतिं वितेने ॥ टिप्पनी विषदार्थयग्रभूतार्थप्रकाशिनी। श्रीरा मोदकरी नाम्ना दायभागप्रबोधिनी॥ इति श्रीकृष्णतर्कालङ्कार भट्टाचार्य्यकृता दायभागटीका समाप्ता ॥०॥ शुभमस्तु ॥०॥